४३

॥ ओम् ॥

# ॥ योगमकरन्दः ॥

योगमञ्जरीनाम स्वप्रणीत व्याख्यासहितः।

साङ्ख्ययोगवेदान्तोपाध्यायैः

श्रीकुलयशस्वि शास्त्रिभिः

सम्प्रति

(श्रीशङ्करब्रह्मण्यदेव तीर्थस्वामिभिः)

प्रणीतः।



कालिकात्ता नगर्य्याम्।

"सरस्वती यन्त्रालये" मुद्रितः।

विक्रमीयेऽष्टसप्ताङ्कभू १९७८ वर्षे।

विना मूल्य

द्वितीय...

१...

॥ ओम् ॥

# ॥ योगमकरन्दः ॥

योगमञ्जरीनाम स्वप्रणीत व्याख्यासहितः ।

साङ्ख्ययोगवेदान्तोपाध्यायैः

श्रीकुलयशस्वि शास्त्रिभिः

सम्प्रति

(श्रीशङ्करब्रह्मण्यदेव तीर्थस्वामिभिः)

प्रणीतः ।




कालिकाता नगर्य्याम् ।

"सरस्वती यन्त्रालये" मुद्रितः ।

विक्रमीयेऽष्टसमाङ्कभू १९७८ वर्षे ।

विना मूल्य

द्वितीय
१

श्रीः ॥

# भूमिका।

इह खलु प्रेक्षावन्तोऽप्रेक्षावन्तो वा सर्वे—एव जना दुःखं जिहासन्ति। तत्रैतावानेव तु विशेषो यत्प्रथमे घोप्रभावेण तत्प्रभवन्ति प्रहातुं, न परे। उपाये—एव च पुरुषव्यापारोनो-पेये—इत्युपायं गवेषयन्ति तदीयम्। तत्रापिच लौकिकास्ते राज्यवाणिज्यादिरूपा नीति भैषज्यादिरूपा वा न खल्वेकान्ततोऽ-त्यन्ततश्च दुःखमुन्मूलयितुमवकल्पन्ते। तत्कस्य हेतोः, समूल-मनुन्मूलनात्तस्य। नहि शास्त्राधिगमैकगम्यविवेकविज्ञानम-न्तरा—अविवेकजपुंप्रकृतिसंयोगप्रभवानन्तदुःखपरम्परा परि-हातुं शक्या नाम। तत्रानन्तसन्ततदुःखज्वालाजटिलजगज्ज्व-लनकवलीकृताज्ञनानुद्दिधीर्षुर्भगवान् नारायणः स्वयं कपिल-मूर्त्याऽवतीर्य्य करुणापरायत्तः—समासव्यासयोगाभ्यां विवेक-शास्त्रं प्रणीयाऽऽसुरि पञ्चशिख प्रमुख परमर्षि शिष्य प्रशिष्य पारम्पर्य्येणोपदेश प्रत्युपदेश परिपाट्या प्रवर्त्तयाम्बभूव। यत्र विवेकं हेयस्य निदानं विवेकञ्च तद्धानोपायं प्रतिपादयामास। विवेकोनाम पुरुषविशेष्यकः प्रकृत्यन्यत्वप्रकारकः (पुरुषः प्रकृति भिन्नः) साक्षात्कारः। सोऽयं खलु साक्षात्कारोनिदि-ध्यासनैकसाध्यः "आत्मा वा अरे द्रष्टव्य" इत्यादिश्रुतेः। च निदिध्यासनं किं वा कीदृशं वा कतिविधं वा के नस्तदुपायप्रत्युपाया इति तदीयमशेषविशेषं प्रतिपादयद् स्वयं स्वयंभूर्भगवान् कल्पारम्भे प्रजापतीन् परमर्षींश्च

प्रशास—अथानुशशास भगवान् शेषः पतञ्जलिमूर्त्या । तच्च पातञ्जलं शास्त्रं व्यासदेव भोजदेवादयो व्याचख्युरेतच्च वैयासिकं वाचस्पतिमिश्रविज्ञानदेव प्रभृतयः । एवं सुबहुशाखाप्रशाखा सन्तानविततमिदं शास्त्रं विदुषामपि दुर्ग्रहमिवापेदे—इति सौकर्य्येण विदुषां तस्य पाठग्रहमर्थग्रहञ्चापेक्षितं चिररात्रायाऽऽकलय्य न खलु कारिकागुम्फनादृते सुग्रहो भवति पाठः—नच पाठसुग्रहमन्तरेण तज्ज्ञोभवत्यर्थावबोधः सुखेनेतिनिरचैषं, प्राणैषञ्च योगमकरन्दम् । किञ्च स्वरूपावाप्तये सर्वोपायैर्मुमुक्षुभिरायासो विधेयो यथा न भवेत्पौनःपुन्येन घोरेषु संसाराङ्गारेषु परिपाक इत्यस्ति सर्वेषां महर्षीणां दुन्दुभिताड़नपुरस्सरो दीर्घरवप्रयुक्तो महाडिम्डिमः । सर्वोपायेषु च गरिष्ठो वरिष्ठश्च योगएवोपायः । "तपस्विभ्योऽधिकोयोगी ज्ञानिभ्योऽपि मतोऽधिकः ॥ कर्म्मिभ्यश्चाधिको योगी तस्माद् योगी भवार्ज्जुन" इति वचसा स्वयं योगीश्वरेण भगवता श्रीकृष्णेनार्ज्जुनम्प्रति योगस्य वरीयस्त्वप्रतिपादनात् । स च योगो यमाद्यष्टाङ्गानुष्ठानसाध्यो महदायासेन सम्पाद्यते सम्पादकै मुमुक्षुभिः । यतो न क्षमन्ते तेऽपि योगतत्वविद्गुरूपदिष्टयमाद्यष्टाङ्गाऽनुष्ठान प्रक्रियामन्तरेण साधयितुं योगम् । योगतत्त्वविद् गुरुश्चापियोगशास्त्रोपदिष्टामेव यमाद्यष्टाङ्गानुष्ठान प्रक्रियां प्रतिपादयन् सुसेव्यतामुपपद्यते गुरुताञ्च । अन्यथा सोऽप्यश्रद्धेयवचनतया क्षिप्रं मुमुक्षुभिर्योगारुरुक्षुभिरुपेक्ष्यत एवेति योगशास्त्रस्यैवाव्याहतं योगाङ्ग प्रकाशन सामर्थ्यम् । योगशास्त्रप्रकाशितयोगाङ्ग प्रकाशश्च योगग्रन्थेभ्य एव नान्यतस्ते च तूसं योगारुरुक्षुभिर्योगतत्वजिज्ञासुभिर्न युगपदुपलभ्यन्ते शक्यन्ते वा द्रष्टुमिति व्यरचयं योगग्रन्थसारभूतं योगमकरन्दम् । [illegible] तथापि शास्त्रीयसमासस्य व्यासैकगम्यतया विद्वज्जनानु[illegible] योगमञ्जरी नाम तद्व्याख्यां न्यभान्त्सम् ।

अथापि पुस्तकसौकर्य्यमनालोच्य मुद्रितमचीकरम् । यद्यप्ययं योगमञ्जरीव्याख्योपबृंहितो योगमकरन्दः प्रागपि मुद्रितस्तथापि तदीयमुद्रणसमये कार्य्यवशादनुपस्थितेमयि शोधकमुद्रापकप्रमाद-जनितानन्तदोषवत्तया नासौ मनोहरतां लभतेस्म । सम्प्रति मुद्रण-समये समुपस्थिते मयि शोधक मुद्रापक प्रमादजनितदोषाणां विरहान्मनोहरतामुपलब्धवानिति सफलयन्तु सन्तो विद्वांसो ऽमत्सरिणोऽध्ययनाध्यापनपरिपाट्या चाम्यन्तु चैतद्ग्रन्थग्रन्थने-ऽन्यथाभावमिति ।

सांख्ययोगवेदान्तोपाध्यायः कुलयशस्वि शास्त्री ।

( सम्प्रति श्रीशङ्कर ब्रह्मण्यदेव तीर्थस्वामी । )

मुद्रापितश्चायं मरुधन्वदेशान्तर्गत कालूग्रामस्थ सारस्वत श्रीगणेशदत्त पण्डितवर प्रोत्साहितेन (यमुनादासचेमका) इत्यनेन मरुधन्वतदेशान्तःस्थ रत्नगढ़निवासिना वणिग्वरश्रेष्ठिनेतिशम् ॥

---

ॐ

॥ नमः परमात्मने ॥

# योगमकरन्दः

## योगमञ्जरी सहितः

### प्रथमः पादः ।

अम्बां श्रीतुलसीमतुल्यविलसद्वात्सल्यसीमान्तथा
तातं श्रीगिरिधारिणं * द्विजजनक्षेमैकदीक्षाधरम् ।
शास्त्राम्भोज विकासवासरमणिं श्रीराममिश्राह्वयं
श्रीमन्तञ्च गुरुं जनःपुनरयं नित्यं नमत्यञ्जसा ॥ १ ॥

* योगमञ्जरिकया कया चिदप्येतया मुद मुदावहन्तु भोः ।
अत्र योगमकरन्दसुन्दराऽमन्दतुन्दिलहृदा सदालयः ॥२॥

स्वानुजशालिग्रामाध्ययनस्य कृते कृतेयमस्ति कृतिः ।
श्रीहरिदासपितृव्यप्रेरणया योगमञ्जरी नाम्ना ॥ ३ ॥

---

* निज ।

* सतामालयः सदालयः सर्वे विद्वज्जनाः "कया चिदपि" इत्यनेनैतद्ग्रन्थनिर्माणे ग्रन्थकर्त्तुरनायासो व्यज्यते यद्वा अनुभवैकगम्यसारयाऽनया मंजुलया योगमञ्जर्या मोदमासादयन्तु या खलु योगमकरन्दो नाम मूलकारिकाग्रन्थस्तत्प्रतिपाद्यार्थप्रतिपादनपरा अथ च सदा अलयो भ्रमरा—इत्यादिर्द्वितीयोऽर्थः स्वयमूहनीयः ।

तत्र तावन्निजनिर्म्मितयोगमकरन्दव्याख्यानं चिकीर्षुर्विघ्नविघाताय कृतं स्वेष्टदेवतानिर्देशरूपमङ्गलं शिष्यशिक्षायै निबध्नाति-"यस्य भासेति।"

यस्य भासा जगत्सर्वं भाति स्थावरजङ्गमम्।
भ्रान्तिमात्रैकदेहन्तं विश्वनाथमहम्भजे॥ १॥

तत्र श्लोकार्द्धेन स्वेष्ट देवताया निखिलजगदवभासकत्वप्रतिपादनात् "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातो" तिश्रुत्यर्थोऽपि भवति सूचितः। एतदुक्तम्भवति यद्यपि नित्य शुद्ध बुद्ध मुक्त स्वभावः परमानन्दमूर्त्तिर्भगवान् विश्वनाथोनास्ति तस्याणुरपि गन्धो देहसम्बन्धस्य तथाप्यतोवघोर संसाराङ्गारपरिपच्यमानाङ्गानां जननमरणान्धकारे विपरिवर्त्तमानानामर्वागदृष्टशाञ्जन्तूनां स्थान्नास कथञ्चित् क्लेशतिमिरविनाश इति करुणया देहमुपात्तवान्॥ १॥

क्लेशकर्मसमुत्थबन्धबन्धनैर्दूरतः परिपलाययति सदा।
यत्र चेतसि सकृत्समागते तं परं पुरुषमाश्रयामहे॥२

स्वप्नदास्पदं निर्विशेषंब्रह्म निर्दिश्य प्रकृतशास्त्रानुसारेण सविशेषं प्रणमति—। "क्लेश कर्म्मेति।" यस्मिन् भगवति पुरुषोत्तमे भजता जनेन स्वहृदये सकृदपि साचात्कृते सति भक्तस्य क्लेश कर्म्म विपाकाशयाः सर्वथा नश्यन्ति मुक्तो भवति स इति यावत् तस्य तु पुनर्भगवतः किमु वक्तव्यं तेभ्योऽस्पृष्टत्वमित्येतावता "क्लेश कर्म्म विपाकाशयैरपरामृष्ट" इत्यादिः प्रकृतशास्त्रार्थः कापिलतन्त्रादसाधारणोऽपि भवति ध्वनितः॥ २॥

इह खल्वपवर्गसिद्धये बह्वनुपायानुपदिशन्ति तीर्थकारास्तद्यथा वस्तुतत्त्वज्ञानमौपनिषदाः सप्तपदार्थज्ञानं च काणभुजाः।

कर्म्माणि च मीमांसकाः। तत्र न प्रथमः कल्पः—एतन्मते वस्तुतत्त्वस्याविषत्वेन तद्विषयज्ञानासम्भवाद् यदि च कर्म्मधारयमाश्रित्य वस्तुतत्त्वभूतमेव ज्ञानमपवर्गसाधनं नतु तद्विषयमित्युच्येत तथापि ज्ञातं सत्तदपवर्गसाधनमज्ञातं वा। न ज्ञातं सत्तदपवर्गसाधनं सविषयत्वापत्तेः। नाप्यज्ञातं सदिति, अज्ञातसतस्तस्यापवर्गाजनकत्वान्नह्यज्ञातंसत्तदपवर्गजनकमज्ञातसतोवस्तुतत्त्वस्य सार्वदिकत्वेन सर्वदा मोक्षजननप्रसङ्गादननुभूतवस्तुतत्त्वानामप्यपवर्गसिद्धिप्रसङ्गाच्च तन्निरासाय ज्ञातस्य तस्य कारणत्वाङ्गीकारे निरुक्त एव स विषयत्वापत्तिर्दोषः किञ्च ज्ञानानां सविषयकत्वनियमानुरोधेन वस्तुतत्त्वभूतज्ञानेऽपि सविषयकताया अवश्यमङ्गीकरणीयत्वेन तज्ज्ञानमपि वस्तुतत्त्वान्तरविषयं वक्तव्यमिति कस्यापवर्गहेतुत्वं पूर्वस्यापरस्य वेत्यपि पर्य्यनुयोगापत्तेरनवस्थादयो दोषाश्च स्फुटा एवेति न वस्तुतत्त्वज्ञानमपवर्गजनकमिति।

नापि द्वितीयः—अपवर्गहेतुत्वेन काणभुजाभिमतपदार्थज्ञानस्यार्वाग्दृशामनुत्पत्तेः। नच सामान्यलक्षणया तज्जन्यत इति साम्प्रतम्। तज्जनितज्ञानस्याभिज्ञानभिज्ञोभयसाधारण्येन हेतुत्वानुपपत्तेः। नहि सामान्यलक्षणाजनितं ज्ञानमपवर्गसाधनायालमलौकिकत्वान्नह्यलौकिकं तदविद्यामुच्छेत्तुमीष्टे तस्या लौकिकैकसाक्षात्कारनिवर्त्यत्वात्तदुच्छेदकत्वेपि तज्जनितज्ञानस्याविदुषोऽपि सम्भवात्तस्यापि मोक्षभागित्वं प्रसज्येतेति न सामान्यलक्षणाजनितं ज्ञानमपवर्गसाधकम्।

नचैतद्भियैव तज्जनितज्ञानमपवर्गनिर्वर्त्तकमिति नोच्यतेऽपि तु तत्तद्धर्म्मप्रकारकं लौकिकमिति. पदार्थानामानन्त्येन विभिद्य तत्तद्धर्म्म पुरस्कारेण ज्ञातुमशक्यत्वात्। न च पदार्थानां

विशिष्य तत्तद्धर्म्म पुरस्कारेण ज्ञातुमशक्यत्वेपि सुकरं तदीयं विभाजक रूपेण ज्ञानमिति, तस्यापि स्वाश्रयीभूतयावद्व्यक्तिग्रह-मन्तरानुत्पत्तेस्स्वाश्रयीभूतयावद्व्यक्तिग्रहस्त्वार्वाग्दृशामनुपपन्न इति न काणभुजं मतमपि सम्यक् ॥

नापि तृतीयः । कर्म्मणामविवेकनिवर्त्तकत्वासम्भवान्नहि कर्म्माणि साक्षादविवेकप्रतिबन्धकान्यविवेकस्य स्वविरोधिविवेक प्रतिबध्यत्वात् । नहि विवेको नाम कश्चित् पृथक् प्रतिबन्धकतया भवदभिमतीयः प्रत्युदितः सन् समूलघातं निवर्त्तयेदविवेकं कर्म्माणि च स्वयमेवाशुद्ध्यादियुक्तानीति नालं विवेकं जनयितुं प्रागेवापवर्गमिति कथात्रयाभिमतापवर्गोपायानामनुपायत्वेन योग विदभिमताऽविप्लवा विवेकख्यातिरेव मोक्षसाधनं सा च योगाङ्गानुष्ठानजनिताशुद्धिसमुच्छेदानुवर्त्ति ज्ञानदीप्त्यासाद्या तथा चाहस्म महर्षिर्भगवान् पतञ्जलि "योगाङ्गानामनुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्याति" रितियोगस्वरूपमाह—। "निरोध" इति ।

**निरोधश्चित्तवृत्तीनां स योगो द्विविधोमतः ।**

**निर्वीजः प्रथमस्त्वेकस्सवीजस्स्याच्चतुर्विधः ॥ २ ॥**

तल्लक्षणं च क्लेश कर्म्म विघटकत्वे सति चित्तवृत्तिनिरोधत्वम् । क्षिप्त मूढ़ादिषु माभूद्योगत्वमिति सत्यन्तनिवेशस्तथा च तत्र वृत्तिनिरोधसत्त्वेपि क्लेशकर्म्माद्यविघटकत्त्वात्तस्य न तेषु योगत्वम् । विवेकख्यातावपि तद्विघटकत्वसत्त्वात्तद्वारणाय निरोधान्तम्—यद्वा स्वरूपावस्थितिहेतुचित्तवृत्तिनिरोधत्वं योगत्वमिति लक्षणम् । निरोधश्चात्र वृत्तिनिष्ठप्रतियोगिताको भावरूप एव बोध्यो न तु तदवच्छिन्नप्रतियोगिताकस्तेन न सम्प्र-

ज्ञातात्मकयोगापरिग्रहो न वाऽभावरूपस्य तस्य संस्कारप्रतिबन्धकतानुपपत्तिः। योग शब्दश्च युजिसमाधावित्यस्मान्निष्पन्नो नतु युजिर्योगे—इत्यस्मात् "तं विद्याद् दुःख संयोगवियोगं योगसंज्ञितमि" त्यादिना भगवद्गीतासु वियोगस्यैव योगत्वप्रतिपादनात् स्यादेतत् चित्तवृत्तिनिरोधोयोग एव कथं चित्तस्य चिन्तनैकवृत्तिकत्वात्तदीयचिन्तनैकवृत्ति निरोधेऽपि तदितरसङ्कल्पाभिमानाध्यवसायरूपवृत्तोनामनिरोधान्नहिचित्तवृत्तिमात्रनिरोध एव कस्य चिदभिमतो योगो व्युत्थानसाधारण्यादनिरुद्धसङ्कल्पादि वृत्तिमतामपि योगिनामिव ध्यानदोषिप्रसक्तेश्च तस्मान्नचित्तवृत्तिनिरोधो योग इति साम्प्रतमिति प्राप्ते—

उच्यते—चित्तपदेनात्रान्तःकरणसामान्यस्य महतोऽभिधानान्महांश्च प्रकृतेराद्यःपरिणामस्सच सङ्कल्पाभिमानाध्यवसायचिन्तनात्मकवृत्तिचतुष्टयवान्तिति युक्तं तन्निरोधस्य योगत्वम्। न च महतो वृत्तिचतुष्टयात्मकत्वे, "प्रकृतेर्महांस्ततो ऽहङ्कार स्तस्माद्गणश्च षोडशकः" इति साङ्ख्यकारिकायां मनसोऽहङ्कारस्य च महतः पार्थक्येनाभिधानात्तद्विरोध इति शङ्क्यम्। तत्र सर्ववृत्त्यङ्कुरीभूतमहतस्सङ्कल्पाभिमानात्मकवृत्तिरूपविशेषमादाय-पार्थक्येनाम्नानादत एव क्वचिच्चतुष्टयं क्वचित्त्रितयं क्वचिद्द्वितयमन्तः करणं भाषन्ते शास्त्रकृतः। तथाचोक्तं वासिष्ठे—"अहमर्थोदयो योयं चित्तात्मा वेदनात्मकः। एतच्चित्तद्रुमस्यास्यवीजं विद्धि महामते॥ एतस्मात् प्रथमोद्भिन्नादङ्कुरोऽभिनवाकृतिः। निश्चयात्मा निराकारो बुद्धिरित्यभिधीयते॥ अस्य-बुद्ध्यभिधानस्य याङ्कुरस्य प्रपीनता। सङ्कल्परूपिणी तस्याश्चित्तचेतोमनोऽभिधेति" तथाचात्र वाक्येऽहमर्थेनान्तःकरणसामान्यमभिधाय स्फुटास्तदीयाश्चित्ताद्यवस्थाभेदाः प्रदर्शिता इति युक्तं

चित्तपदेनात्र प्रकृत्याद्यपरिणामस्य महत्त्वस्याभिधानं * तच्चत्रि-गुणं प्रकाश प्रवृत्ति स्थिति शीलत्वात् सत्त्वगुणं प्रकाशशीलत्वाद् रजोगुणं प्रवृत्तिशीलत्वात् तमोगुणं स्थितिशीलत्वात् सत्त्वगुणमैश्वर्य्यविषयप्रियं तद्देवादीनाम् । रजोगुणमस्थिरं तच्च दैत्यदानवादीनाम् । क्रोधद्वेषादिवृत्तिमत्तमोगुणं तच्च रक्षः पिशाचादीनाम् । नन्वेकमेव चेच्चित्तं कथमनेकावस्थम्भवेन्न-ह्येकमनेकावस्थम्भवितुमर्हतीति चेत् सत्यम्-एकस्यापि चित्तस्य त्रिगुणनिर्मितत्वेन गुणानां वैषम्यादनशेनप्रविमर्द्दवैचित्र्येण विचित्रावस्थासम्भवात् सलिलवत् यथैकस्यापि सलिलस्य स्वाश्रय-यावदुपाधिभेदनिबन्धनं सम्पद्यते वैचित्र्यमेवमेवैकस्यापि चित्तस्य विमर्द्दभेदनिबन्धनं वैचित्र्यम् । अथ कीदृशं तच्चित्तं यदीयवृत्तिनिरोधोयोगोऽभिहितः । मध्यमपरिमाणवदथाणु विभु वेति । अत्र साङ्ख्याः मध्यपरिमाणवदेव चित्तं तच्च सङ्कोच विकाशशालि देहाकारपरिमाणं घटं गेहादिप्रदेशान्तर्वर्त्ति प्रदीप वत्तथाकार्यदर्शनाद् यथादीपो घट गेहादि प्रदेशान्तरस्थो घटाद्गेहाद्वा न वहिरवभासयति तथा चित्तमपि देहप्रदेशान्त-र्वर्त्ति प्रमाणाभावाद्देहाद्वहिश्चित्तसद्भावेऽतश्चित्तमेव मातङ्ग कुरङ्ग भृङ्गादिदेहेषु सङ्कोच विकाशौसम्पद्यते घटप्रासादादिमध्यवर्त्ति-प्रदीपवदितिसङ्कोच विकाशशालि मध्यमपरिमाणवदेवचित्तमिति ब्रुवते ॥ अपरे तु अणुत्वमेव चित्तस्य ज्ञानानां यौगपद्येनोत्पत्त्य-सम्भवान्नहि ज्ञानानि युगपदुत्पत्तुमुत्सहन्तेयेनाश्रीयेत् चित्तस्य सङ्कोचविकाशशालित्वान्मध्यमपरिमाणत्वं विभुत्वं वाऽन्यथा-विरुद्धस्वभावयोः सुख दुःखयोरप्यनुभवस्य विरुद्धस्य युगपज्जन-नापत्तेः। नहि कदाचित् कोऽपि कथञ्चित्सुखदुःखे विरुद्धे

* चित्तम् ।

यद्यदेकक्षणेऽनुभवति विरुद्धत्वात्तद्विषयकानुभवयोस्तथा च सूत्रम् "युगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्ग" मिति नचेदं विरुद्ध-मुच्यते युगपज्ज्ञानानि नोत्पद्यन्ते पादयोर्मे वेदना शिरसि मे सुखमितिज्ञानयौगपद्यानुभवादिति,—युगपत्क्षणोत्पत्तिकत्वप्रति-षेधात्—नहि वयं युगपदवस्थितिकत्वं ज्ञानानां वारयामोऽपितु युगपत्क्षणोत्पत्तिकत्वं तथाच न दोषः पादयोर्मे वेदना शिरसि मे सुखमितिभिन्नक्षणोत्पत्तिकयोरपि ज्ञानयोर्युगपदवस्थाने, एकोत्पत्तिकत्वानुभवश्चातीवतीव्रवेगशालित्वाच्चित्तस्येतिपर्य्यायेणे-न्द्रियैः संयुज्यमानमणवेचित्तमित्यभिदधिरे ॥ विभ्वेवचित्तं वृत्ति रेवास्यसङ्कोचविकाशशालिनीतियोगाचार्य्यास्तत्रनाद्यश्चित्तस्यमध्य-मपरिमाणवत्त्वेन सावयवत्वापत्त्या कदाचिद्विवेकख्यातेः प्रागपि घटादीनामिव विनाशित्वसम्भवात् । नापि द्वितीयश्चित्त-स्याणुत्वे देहव्यापिज्ञानानुपपत्तिरित्यादिदोषप्रसक्तेरिति तृतीय एव सम्यगवशिष्यत इति चित्तवृत्तिनिरोधस्वरूपं योगमुक्त्वा तस्य द्वैविध्यमाह—"स" इति । सचित्तवृत्तिनिरोधात्मको योगोद्विविधोऽसम्प्रज्ञातःसम्प्रज्ञातश्च तत्रासम्प्रज्ञात एकविधो निर्बीजपदेनापि व्यपदिश्यते निर्गतं क्लेशकर्म्मादि वीजं यत्रेति-व्युत्पत्तेः । क्लेशकर्म्मादि बीजसहितत्वात्तु सम्प्रज्ञात.सवीज-पदव्यपदेश्यः स च वितर्क विचारानन्दास्मिता भेदाच्चतुर्विधस्तत्र य इन्द्रियाण्यात्मबुद्ध्योपासते तेषां समाधिर्वितर्कः ये भूतादीनेव वात्मबुद्ध्योपासते तेषां विचारः । येऽभिमानमेवात्मबुद्ध्योपासते तेषामानन्दः । ये बुद्धिमेवात्मबुद्ध्योपासते तेषामस्मिता । वितर्क्यन्ते रूपादिज्ञानसकरणकत्वानुमितिविषयीक्रियन्त इति वितर्काणीन्द्रियाणि । विचरन्ति विशिष्य प्रवर्त्तन्ते व्यापृता भवन्तीन्द्रियाणि येषु तानि विचाराणि भूतानि—

विशिष्टेन्द्रियाणां चारस्य प्रवृत्तेर्व्यापारस्य भूताद्यात्मकविषय देशदर्शनाद्युक्तं विचारत्वं भूतानाम्। सत्स्वपि विषयेषु तत्र निजाभिमानाऽभावे विशिष्यानन्दस्यानुदयादित्यभिमान-पूर्वकत्वाद्विषयानन्दस्येत्यभिमानिष्युपचरितानन्दशब्दप्रयोगसम्भवा-दानन्दोत्राऽभिमानः। पुरुषाविविक्तायां बुद्धावप्यस्मीति प्रत्यय विषयतासम्भवादित्यस्मिता बुद्धिस्तथाचविषयव्यपदेशमादाय विषयिसमाधीनां तथा व्यपदेशस्तस्मादिन्द्रियविषयो वितर्कः। भूतविषयोविचारः—अभिमानविषयश्चानन्दः—बुद्धिविषया चा-स्मितेति निष्पन्नं तथा च पर्य्यायेणोत्तरोत्तरसमापत्तिमतां क्रमशोऽधिकाधिकतराधिकतमानन्दलाभोपि सम्भवति सूक्ष्म-त्वात् पूर्वस्मात् पूर्वस्मादुत्तरोत्तरेषां तथा चोत्तरोत्तरस्य परत्वे श्रुतिः। "इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं * मनोमनसस्तु पराबुद्धि"रिति स्मृतिश्च व्यक्तमेव दश-शतसहस्र-दशसहस्र-मन्वन्तरभेदेनेन्द्रियादिचिन्तकानामुत्तरोत्तरमानन्दन्दर्शयति तथ्य-था "दशमन्वन्तराणीह तिष्ठन्तीन्द्रिय चिन्तकाः। भौतिकास्तु शतं पूर्णं सहस्रन्त्वाभिमानिकाः॥ बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वरा" इति—अत एवाग्रे "पूर्णं शतसहस्रन्तु तिष्ठन्त्य-व्यक्तचिन्तका" "इत्यनेन प्रकृतिलयान् प्रतिचतुष्टयानुगताव्यक्त-विषयसम्प्रज्ञातस्य पूर्णफलमभिधाय "पुरुषं निर्गुणम्प्राप्य कालसङ्ख्या न विद्यत इति काल संख्याऽभाव प्रतिपादनेन सर्व-वृत्त्यभावरूपोऽसम्प्रज्ञातयोगः प्रदर्शित इति स्थितं चातुर्विध्यंसम्प्र-

---

* मनःपदेनात्राहङ्कारो वेदितव्यः कारणेऽपि कार्य्यनिर्देश-सम्भवस्य पट कारणतन्तुदाहे पटोदग्ध इत्यादौ दृष्टत्वात्—मनस एकादशेन्द्रियत्वस्वीकारे इन्द्रियेभ्य इति पूर्वोक्तेनापिगतार्थत्व-सम्भवाच्च।

ज्ञातस्य ॥ अथ बुद्धिबोधात्मा पुरुषोनिरोधावस्थे चेतसि किं बोधाभावान्न प्रकाशतेऽप्ययं वा गतो भवति जाड्यं वोपगतस्मिन् वृत्त्या पुनश्चेत्यत इत्यत आह—। "स्वरूपेति" ।

स्वरूपावस्थितिर्द्रष्टुर्निरोधेऽपरिणामिनः ।
व्युत्थाने वृत्तयोयद्दात्मा तद्वदिहेष्यते ॥४॥

न तदानीं जाड्यं गतो भवति नवाऽप्ययंगतो भवति नापि न प्रकाशते नापि जाड्यंगतः पुनर्वृत्त्या चेत्यते किन्तु स्वरूपावस्थित एव भवति । ननु किन्तत् स्वरूपं यत्र तस्यावस्थानमिति-तद्विशेषणत्वेन तत्स्वरूपं सूचयति—। "अपरिणामिन" इति । पुरुषोऽपरिणाम्यप्रतिसंक्रमोऽदर्शितविषयः शुद्धोनन्तश्चेति चित्तन्तु तद्विपरीतं परिणामि दर्शितविषयमशुद्धं सान्तं चेति भावः । ननु निरोधे स्वरूपावस्थितोऽपि सन् व्युत्थाने स्वरूपाच्चुयतो भवेदित्यत आह—। "व्युत्थान" इति । नहि पुरुषो व्युत्थाने स्वरूपात्प्रच्यवतेऽपितु वृत्तिसारूप्यमधिगच्छति दर्शितविषयत्वात् स्फटिकवद्यथा स्फटिको जपाकुसुमसामीप्याज्जपाकुसुमसारूप्यम्भजत एवं बुद्धियुक्तः पुरुषोपि भजते तदीयवृत्तिभिर्व्युत्थाने तत्सारूप्यंयेन कर्त्ताहमस्मि भोक्ताऽहमस्मीत्यभिमन्यते—इति न स्वाभाविकं पुरुषस्य वृत्तिमत्त्वं तथोक्तं "तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टय इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमा" इति व्युत्थाने स्वरूपादप्रच्युत एव वृत्तिसारूप्यं लभते पुरुषा ऽपरिणामी ॥ ननु वृत्तीनामानन्त्येन तन्निरोधासम्भवात्कथं वृत्तिनिरोधोयोगः कथं वा पुरुषेण निरोद्धव्यास्ता इति नामनिर्देशपूर्वकं वृत्तीर्दर्शयति । "निद्रेति" ।

निद्रास्स्मृतिविपर्यासाः प्रमाणं सविकल्पकम् ।
वृत्तयः पञ्चतय्यःस्युः क्लिष्टाक्लिष्टात्मिकाश्चताः ॥५॥

आसां लक्षणान्यग्रे वक्ष्यति पञ्चतय्य इत्यस्य च पञ्चप्रकारा इत्यर्थोनतु वृत्तिरूपोऽवयव्येकस्तदवयवा निद्रा स्मृति विपर्य्यय प्रमाण विकल्पाः पञ्चेति, तथासति बहुवचनानुपपत्तेः। न च पुरुषभेदेन वृत्तिरूपावयविनां भिन्नतया बहुवचनोपपत्तिरिति युक्तम्। पुरुषाणामानन्त्येन वृत्तीनामनन्तत्वेपि परसमवेतानां तासां परस्य साक्षात्कारानुदयाद्वर्षसहस्रेण कदाचिदपिवा वृत्तिनिरोधानुत्पत्तेः। अथ माभूत्पुरुषभेदभिन्नानां परसमवेतानां वृत्तीनां निरोधःस्वीयवृत्तेस्तुस्यादयं निरोध इति चेत् सत्यम्-वृत्तिरूपावयविनामनेकत्वेपि स्वीयवृत्तिरूपावयविन एकत्वेन वृत्तीनामानन्त्यानुपपत्त्या स्वीयानन्तवृत्तिनिरोधमभिदधतो मूलकारस्य बहुवचनोपवर्णनासङ्गत्यापत्तेः किञ्च पञ्चतय्य इत्यत्र तयपोऽवयवार्थकत्वमङ्गीकृत्य पुनः पुरुषभेदेन बहुवचनोपपादनं न सम्यगधिककल्पनापत्तेरवयवार्थकत्वस्वीकारेपि वृत्तिरूपैकावयविनः पञ्चावयवकल्पनेऽवयवान्तरशङ्काऽव्युदस्तैव नहि हस्तपादद्वयं शरीरावयवावित्युक्तेऽवयवान्तरं नावगम्यत इति, एवं वृत्तेः पञ्चावयवा इत्युक्तेऽपि नावयवान्तरशङ्काऽपैति वृत्तीनामानन्त्येन तदीयेयत्ताप्रतिपादनप्रवृत्तस्य "क्लिष्टाऽक्लिष्टाश्च पञ्चधा वृत्तय" इति भाष्यस्यापि वैयर्थ्यम्प्रसज्येतेति नावयपञ्चकवती वृत्तिरित्यर्थोयुक्तोऽवयवानां प्रमाणादीनां तत्तद्व्यक्तिभेदतोऽनन्ततया, पञ्चत्वव्याहतेश्च जात्या पञ्चत्वप्रतिपादने तु निरुक्तं कल्पनागौरवमिति "पञ्चतय्य" इत्यस्य पञ्चप्रकारा इत्येवयुक्तोऽर्थं एवञ्चवृत्यन्तरशङ्काया अपि व्युदासस्सम्भवः प्रकारस्यात्र स्वव्याप्यतत्तद्धर्म्माश्रयतास्वरूपत्वात्—यथा दशविधा

ब्राह्मणा इत्युदिते न ब्राह्मणत्वरूपदशधर्म्मवतां ब्राह्मणानां बोधो-दयस्तदाश्रितब्राह्मणत्वरूपजातेरैक्यान् किन्तु ब्राह्मणत्वव्याप्य तत्तद्धर्म्मवतां दशब्राह्मणानामिति न ब्राह्मणान्तरशङ्कोत्पद्यते। एवमेव वृत्तयः पञ्चतय्य इत्यत्र वृत्तित्वव्याप्यतत्तद्धर्म्माश्रय वृत्तिपञ्चकबोध उत्पद्यते नापि वृत्त्यन्तरसत्त्वशङ्कोदेतीति पञ्चप्रकारावृत्तय इत्यर्थो वरीयान्-अतएव "वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टा।" इति योगसूत्रार्थमुपवर्णयन् भाष्यकारः 'पञ्चधा वृत्तय" इति विवृतवान्नतु पञ्चावयववतीवृत्तिस्तदवयवा प्रमाणादयः पञ्चेति। निरुक्तानिद्रादिवृत्तीनां हेयत्वप्रतिपादनायाह। 'क्लिष्टेति"। क्लेशादिजनिकास्तामस्योवृत्तयः क्लिष्टाः। सुखप्रकाशादिजनिकास्सात्त्विक्यो वृत्तयोऽक्लिष्टाः। तत्र क्लिष्टा अक्लिष्टाभिर्निरोद्धव्यास्ताः पुनः परवैराग्येण यद्यपि सर्वासामेव वृत्तीनामस्ति क्लिष्टत्वंपुरुषम्प्रति, तथापि सात्त्विकीनामक्लिष्टत्वाभिधानं तामसवृत्त्यपेक्षया, अथ राजस्यो वृत्तयः कुतो न निर्दिष्टास्तासामपि तामससात्त्विकवृत्तीनामिव पुरुषम्प्रतिक्लिष्टत्वादिति चेत्तासामपि क्लिष्टाक्लिष्टात्मकत्वात् क्लिष्टांशस्य तामसवृत्तिष्वक्लिष्टांशस्य सात्त्विकवृत्तिष्वन्तर्भावेण पृथगनुपादानात्। *विवेकख्यातिरपि पुरुषं दुःखा करोति का कथा शान्तघोरमूढात्मिकानां वृत्तीनामतः क्लिष्टास्सर्वा अपि वृत्तय ततश्च सिद्धं सर्वासां हेयत्वम् ॥५॥ प्रमाणादिपञ्चवृत्तिषु प्रमाणवृत्तेर्ज्येष्ठ-

---

* यद्यपि विवेकख्यातिरपि सत्त्ववृत्तित्वेन शान्तासु वृत्तिष्वन्तर्भूतैव तथापि पृथक्कीर्तनं ब्राह्मणपरिव्राजकन्यायेन। यद्वा वृत्तीनामितिस्थाने वृत्त्यन्तराणामितिपाठोज्ञेयः। विवेकख्याति भिन्नवृत्तीनामिति तदर्थः।

त्वेन श्रेष्ठत्वाद्विपर्य्ययविकल्पनिद्रादिवृत्तीनामसतिरिक्तत्वे वादिनां विप्रतिपत्तेश्चेत्यादौ प्रमाणवृत्तिं विभजते । "प्रत्यक्षादी"ति ।

**प्रत्यक्षादिप्रभेदेन प्रमाणं त्रिविधं मतम् ।**
**विपर्य्ययात्मकं ज्ञानमतद्रूपप्रतिष्ठितम् ॥ ६ ॥**

प्रमाणत्वमसंदिग्धाविपरीतानधिगतविषयकबोधरूपप्रमाकरणत्वम् । संशय विपर्य्यय स्मृतिकरणेष्वतिप्रसङ्गवारणायोपात्तं बोधरूपप्रमांशे क्रमशो विशेषणत्रयम् । सामान्यविशेषात्मनाऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं यद्यप्यस्ति प्रत्यक्षमपि सामन्यावगाहि तथापि तस्य विशेषावधारणप्रधानत्वमेवोपसर्जनत्वात् सामान्यम्प्रतिप्रत्यक्षस्य, तदेतद्द्विविधं प्रत्यक्षम्प्रत्यभिज्ञाऽभिज्ञाभेदात्संस्कारसन्निकर्षोभयजन्यंज्ञानं प्रत्यभिज्ञा यथा सोयं देवदत्तइति । विषयसम्बद्धेन्द्रियजन्यंज्ञानमभिज्ञा-यथायं घटोयं पट इत्यादि । लिङ्गज्ञानजन्यःसामान्याध्यवसायोऽनुमानं तदपि द्विविधं वीतावीतभेदात् । तत्रान्वयमुखेन वर्तमानं विधायकं वीतं तदपि च द्विविधं पूर्ववत्सामान्यतोदृष्टञ्च पूर्वंगृहीतव्यक्तिसामान्यविषयमनुमानं पूर्ववत्—यथा वह्नित्वसामान्यविषयमनुमानं तत्र वह्नित्वसामान्यव्यक्तिर्वह्निरूपा गृहीता प्रागप्यनुमितेर्महानसादाविति तद्विषयमनुमानं पूर्ववत् । पूर्वागृहीतव्यक्तिसामान्यविषयमनुमानं सामान्यतोदृष्टं यथा रूपादिज्ञानकरणत्वसामान्यविषयमनुमानं न तत् पूर्वमनुमितेः कुत्रचिदपि गृहीतं, छिदिक्रियाकरणवास्यादौ करणत्वसामान्यस्य पूर्वं गृहीतत्वेपि न रूपादिज्ञानकरणवृत्तेन्द्रियत्वरूपं सामान्यं पूर्वं गृहीतमितिपूर्वागृहीतव्यक्तिसामान्यविषयत्वादस्ति रूपादिज्ञानकरणत्वसामान्यविषयमनुमानं सामान्यतोदृष्टम् । निषेधमुखेन प्रवर्त्तमानंसन्निषेधकमवीतं तच्चैकविधं शेषवदितुच्यते

यथा पृथिव्यामितरभेदानुमानमवयवावयविनोरभेदानुमानं चेतुय-
मामनुमानम् ॥ आगमस्त्वाप्तवचनं तज्जन्या तदर्थविषया वृत्तिश्च
यथा गामानय शुक्लां दण्डेनेति लक्षितं त्रिविधं प्रमाणं, तीर्थ-
कारान्तरग्टहीतप्रमाणान्तराणां त्रिष्वेवान्तर्भावबोधनाय त्रिविध-
मित्युपन्यस्तं कारिकायाम् । विपर्य्ययस्वरूपमाह—। "विपर्य्यये"
ति । तल्लक्षणं च बाध्यमानं ज्ञानं विपर्य्ययः । यथा शुक्ताविदं
रजतमितिप्रत्ययस्य च न प्रमाणं बाध्यमानत्वान्नहि बाध्यमानस्य
प्रमाणता दृष्टा येन बाध्यमानस्यापि विपर्य्ययस्य स्यात्प्रमाणत्वं
नहि प्रमाणोत्थघटादिविषयकोबोधः केनापि ज्ञानेन बाध्यते यथा
रजतविषयकोबोधःस्वविरोधिनोत्तरोत्पन्नेन नेदं रजतमिति ज्ञानेन
तस्मान्न प्रामाण्यं विपर्य्ययः न च संशयस्येहानुक्तत्वादुग्रन्थन्यूनतेति-
वाच्यं संशयस्यातद्रूपप्रतिष्ठितत्वेन विपर्य्ययेऽन्तर्भावसम्भवात् यद्यपि
विकल्पोऽप्यतद्रूपप्रतिष्ठः पुरुषस्य चैतन्यस्वरूपतया चैतन्यासंस-
र्गित्वात्तेन च तदवगाहनात्तथापि विपर्य्ययोत्तरं तद्विरोधिज्ञान-
स्यापामरं प्रसिद्धत्वेन बाधव्यवहारसम्भवाद्विकल्पोत्तरं च तद-
भावादितिविकल्पोऽतद्रूपप्रतिष्ठोपि न विपर्य्ययप्रविष्टः सोयं
विपर्य्यय एतन्मतेऽविद्येत्युच्यते "तमोऽनित्येषु नित्यत्वप्रत्ययः
परिभाष्यते" इत्यग्रे वक्ष्यमाणत्वात्सांख्यमते तु नाविद्या विपर्य्यस्तै-
र्विवेकाग्रहस्यानादिवासनारूपस्याविद्यात्वस्वीकारादिति व्याख्या-
तोविपर्य्ययः ॥६॥ विकल्पमाह—। "वस्तुशून्य" इति ।

वस्तुशून्योविकल्पस्स्यात्ज्जनकश्शब्दज्ञानयोः ।
अभावप्रत्ययालम्बा वृत्तिर्निद्रेति कीर्त्यते ॥७॥

यथा पुरुषस्य चैतन्यं प्रतिषिद्धवस्तुधर्म्मः पुरुष इत्यादिः
पुरुषस्य चैतन्यस्वरूपत्वेन वस्तुधर्म्मप्रतिषेधात्मकाभावस्य पुरुषान्-

तिरिक्तत्वेन च नास्तितद्विषयोभूतः पुरुषचैतन्ययोर्वस्तुतोभेदो-वस्तुधर्म्माभावपुरुषयोराधाराधेयभावश्चेति विकल्पोवस्तुशून्यः। अथ विकल्पस्य वस्तुशून्यत्वे विपर्य्ययेऽन्तर्भावः प्रसज्येत नहि विपर्य्ययोनामास्ति कश्चित्सद्भूतवस्त्ववगाह्यो येन न तत्र विकल्पोऽन्तर्भवेत् यथा विपर्य्ययोऽसद्भूतरजताद्यवगाह्यो तथा विकल्पोप्यसद्भूतपुरुषचैतन्यभेदाद्यवगाह्यो न विकल्पाविपर्य्ययादतिरिक्तः कश्चित्। यदि च शब्दज्ञानोभयजनकत्वं विकल्पलक्षणमुच्येत न वस्तुशून्यत्वं तथापि नार्थान्तरत्वं विकल्पस्य शाब्दबुद्धिजनकवक्तृसमवेतार्थज्ञाने तस्यो * पारोहसम्भवात्। अस्ति शाब्दबुद्धिजनकवक्तृसमवेतार्थज्ञानं शब्दज्ञानोभयजनकं नहि कश्चिदप्यर्थमनवबुध्य बुबोधयिषितं वाक्यं प्रयुंक्ते कारणत्वाद्बुबोधयिषाधीनवाक्योच्चारणम्प्रति वाक्यार्थज्ञानस्य, तस्मात्तदर्थज्ञाने विकल्पस्यान्तर्भावसम्भवेन विकल्पोनार्थान्तरम्। इतिचेद्-उच्यते नहि वस्तुशून्यत्वमात्रं शब्दज्ञानोभयजनकत्वमात्रं वा विकल्पत्वं ब्रूमहे येन स्याद्विपर्य्यये शाब्दज्ञानजनकवक्तृसमवेतार्थज्ञाने वा विकल्पस्योपारोहोऽपितु वस्तुशून्यत्वे सति शब्दज्ञानोभयजनकत्वं तथा च शाब्दज्ञानजनकवक्तृसमवेतार्थज्ञाने वस्तुशून्यत्वस्य विपर्य्यये शब्दज्ञानोभयजनकत्वस्य च विरहेण न विकल्पस्य शाब्दज्ञानजनकवक्तृसमवेतार्थज्ञानविपर्य्ययोरुपारोहः। नचायंरजतत्वेन शुक्तिं जानातीति यदाऽभ्रान्तेनोक्तं श्रोता च तथा प्रतिपन्नं तत्राभ्रान्तवक्तृसमवेतविपर्य्ययस्यापि शब्दज्ञानोभयजनकत्वे सति वस्तुशून्यत्वात्तादृशविपर्य्ययेऽतिप्रसक्तिर्विकल्पलक्षणस्येतिवाच्यम्। अभ्रान्तवक्तृसमवेतविपर्य्ययभिन्न विपर्य्ययमात्रस्य स्वविरोध्युत्तरज्ञानबाध्यत्वान्नायं विकल्पस्स्वविरोध्युत्तरज्ञानबा-

* अन्तर्भावः।

ध्यस्तत्रोत्तरत्र बाधव्यवहारादर्शनाद्विपर्य्ययेचोत्तरत्र बाधव्यवहारः सर्वानुभवसिद्ध इति विपर्य्ययतोवैलक्षण्यं विकल्पस्य, तथाच अभ्रान्तवक्तृसमवेतविपर्य्ययभिन्नत्वेसति । वस्तुशून्यत्वे चसति स्वविरोध्युत्तरज्ञानाबाध्यत्वमिति विकल्पलक्षणस्य पर्य्यवसन्नत्वान्न दोषगन्धःकश्चित् । मूलोक्तशब्दज्ञानोभयजनकत्वं च विकल्पस्य स्वरूपनिर्देशमात्रपरन्तु तल्लक्षणे प्रविष्टमधिकस्य वैयर्थ्यात् ॥ निद्रास्वरूपमाह । "अभावे"ति । जाग्रत्स्वप्नवृत्तीनां योऽभावस्तस्य प्रत्ययः कारणं यदज्ञानं तदालम्बा तद्विषया या वृत्तिःसा निद्रे त्यर्थः । तल्लक्षणञ्च प्रबुद्धप्रत्यवमर्शहेतुत्वम् । सुखमहमस्वाप्सं दुःखमहमस्वाप्सं गाढं मूढोऽहमस्वाप्समिति सत्त्वाद्युद्रेकभेदभिन्नस्य त्रिविधस्य प्रत्यवमर्शस्य प्रबोधे प्रबुद्धस्य सम्भवात्तद्धेतुत्वाच्च प्रत्ययविशेषत्वं निद्रायाः, नह्ययं प्रबुद्धप्रत्यवमर्शोऽनुभवमन्तरेणोत्पत्तुमुत्सहतेऽनुभवहेतुकत्वात्प्रत्यवमर्शस्य तस्मादस्ति प्रत्ययविशेषत्वं निद्रायाः । न च प्रमाणादिवृत्तीनां समाधिप्रतिपक्षिणीत्वान्निरोद्धव्यात्वेऽपि कथमेकाग्रावस्थातुल्याया निद्रायास्समाध्यप्रतिपक्षिणीत्वेन निरोद्धव्यात्वंस्यादितिवाच्यम् । एकाग्रावस्थातुल्यात्वेऽपि निद्रायास्तामसीत्वेन समाधिद्वयविरोधिनीत्वात्-नहीयं निद्रैकाग्रतुल्यापि समाध्यप्रतिपक्षिणी यतोबहुलतमस्विनी तमश्च मोहरूपत्वेन समाधिविरोधीतिनिद्रापि प्रमाणादिवृत्तिवन्निरोद्धव्या ॥ ७ ॥ स्मृतिःप्रमाणादिवृत्तिजनितसंस्कारजन्यत्वेनेतिप्रमाणादिवृत्त्यनन्तरं स्मृतिं दर्शयति—। "स्मृतो"ति ।

स्मृतिवृत्तिरसम्मोषोऽनुभूतविषयस्य च ।
रोधोऽभ्यासविरक्तिभ्यामेतासां योगिसम्मतः ॥८॥

स्मृतिनिद्राविपर्य्यासा इत्यत्र स्मृतेः प्रथमोपादानं पित्र-

पितामहादय इत्यत्र पितृपदोपादानमिव स्मृतिर्वृत्त्यन्तरपूर्वकत्व-प्रदर्शनायाऽत एवाधिगतविषयावगाहिज्ञानं स्मृतिरनधिगत-विषयविषयकश्च वृत्त्यन्तरमित्यपि निष्पन्नम्। स्मृतिरूपं ज्ञानं द्विविधमुत्पादितस्मर्त्तव्यमनुत्पादितस्मर्त्तव्यं चेति। अत्रानुत्पा-दितस्मर्त्तव्यं सा मे मातेत्यादिकं ज्ञानम्। उत्पादितस्मर्त्तव्यञ्च स्वाप्निकगजाश्वरथादिविषयं ज्ञानं नहि तत्रत्यगजाश्वरथादयोऽनु-त्पादिता भान्ति तदानीमेवोत्पादितत्वाद्गजाश्वरथादीनामित्यु-त्पादितस्मर्त्तव्यं तत्। न च स्वाप्निकगजाश्वरथादिविषयस्योत्पा-दितस्मर्त्तव्यज्ञानस्य विपर्य्ययत्वं युक्तमितिवाच्यम्। तस्यापि संस्कारजन्यत्वेन स्मृतित्वाभ्युपगमात् स्मृतिरेवेदं स्वाप्निकं ज्ञानं नहि तत्रानुभूतगजाश्वादीनांभानमनुभूतगजाश्वादीनामिव तत्र भानात्। न च तस्य स्मृतित्वे गजोयमश्वोयमिति न स्यात्प्रत्य-याकारस्तस्माच्च स गजस्सोऽश्वइति साम्प्रतम्। तत्र तत्तांशप्रमोष-सम्भवात् प्रमुष्टतत्ताकाह्योयं स्मृतिरतो न तत्तांशभानसम्भवः। यत्र पुनरप्रमुष्टतत्ताका स्मृतिर्भवत्येव तत्र स गजस्सोऽश्व इत्यपि भानं स्वाप्निकप्रत्ययस्थले च स्वप्नरूपदोषवशात्तत्तांशप्रमोषसम्भवे-न स गजस्सोऽश्वइति नैव भानमत एवायमिति सन्निकृष्टताग्रहो-ऽपीतिस्मृतिरेव स्वाप्निकंज्ञानं यदि च दोषस्योभयत्र हेतुत्वाननु-भवाद्विपर्य्यय एव स्वाप्निकः प्रत्यय इत्युच्येत तदा प्रमाणाभासे प्रमाणमिव विपर्य्ययस्वरूपे स्मृत्याभासे स्वाप्निके प्रत्ययेऽपि स्मृति-रितिव्यवहार उपपादनीयः। तत्तांशप्रमोषस्थलेऽपि स्मृतेरनु-भूतविषयाधिकानवगाहित्वादनुभूतविषययाधिकानवगाहित्वं स्मृतित्वमित्यपि लक्षणं ज्ञेयं स्मृतेः। कारिकायां "स्मृतिवृत्तिरस-म्प्रमोषोऽनुभूतविषयस्य चे" त्यभिधानं वस्तुस्थितिप्रदर्शनार्थम-प्रमुष्टतत्तांशकस्मृतिमात्रलक्षणं वेति चिन्तनीयम्॥ वृत्तिनिरो-

धाल्लकयोगसिद्धये निरोद्धव्यवृत्तोःप्रदर्श्य सम्प्रति तासां निरोधोपायमाह। "रोधोऽभ्यासे"ति। नात्र वैराग्याभ्यासयोर्विकल्पोऽभिमतोऽपितु समुच्चयः। वैराग्येण वृत्तोनां वहिर्मुखता विच्छेदः। अभ्यासेन चान्तर्मुखतासम्पादनेति तयोस्तत्र समुच्चय। योगिसम्मत इत्यत्र विशिष्य योगिपदोपादानं वृत्तानां योगेतराऽनिरोद्धव्यत्वप्रदर्शनार्थम्।८॥ अभ्यासमाह—। "अवृत्तिकस्ये"ति।

**अवृत्तिकस्य चित्तस्य प्रशान्तवाहिता, स्थितिः।**

**तदर्थकः प्रयत्नोयोऽभ्यसनं तत् प्रकीर्त्तितम्॥९॥**

अवृत्तिकस्येत्यस्य राजसतामसवृत्तिशून्यस्येत्यर्थो न तु सर्ववृत्तिशून्यस्येति "प्रशान्तवाहिता स्थिति" रित्यनेन चित्तप्रशान्तवृत्तेरनन्तरमभिधानात्। प्रशान्तवाहिता च चित्तस्य सात्त्विकपरिणामप्रवाहेणावस्थानमनयच्च स्पष्टम्। चित्तस्थित्यर्थं पौनःपुन्येन यत्नोऽभ्यास इति निर्गलितोऽर्थः। अथ राजसतामसवृत्तिशून्यत्वमेव चित्तस्यानुपपन्नं चित्तस्य राजसतामसवृत्तिस्वभावत्वेन तद्रहितत्वासम्भवान्नहि स्वभावस्यापायोदृष्टोनहि प्रततौष्ण्यस्वभावोवह्निः कदाचिदपि स्वभावादौष्ण्यात्प्रच्यवते नीरं वा स्वभावाच्छैत्यात्प्रच्यवते च लौहित्यात् स्फटिक इति न लौहित्यस्वभावःस्फटिकश्चित्तन्तु नैवं वृत्तिस्वभावता चास्य त्रिगुणनिर्म्मितत्वेन सर्वसिद्धेति न स्वभावापायोभवितुमर्हति तथाच साङ्ख्यसूत्रं "स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रमाण्यमितिचेत्सत्यम्। नहि वयंस्वभावस्यापायं ब्रूमहे येन भवेत्त्वदुक्तशङ्कावकाशोऽपितु तिरोभावंस्वभावस्यापायासम्भवेपि शक्यते सोऽपि तिरोभावयितुं यथा जलवृत्तिशैत्यस्य स्वरूपतोऽपायासम्भवेपि वह्निसंयोगादिना

भवति तस्य तिरोभावस्तथा चित्तसमवेतानां राजसतामसवृत्तीनामपि तिरोभावो नानुपपन्न इतिसिद्धं राजसतामसवृत्तिशून्यत्वं चित्तस्य। वृत्तिशून्यत्वंच वृत्त्यन्ताभाववत्त्वं वृत्त्यन्ताभावश्चित्तानतिरिक्तोऽभावानामधिकरणात्मकत्वात्। नचाभावानामधिकरणात्मकत्वे जलवृत्तिगन्धाभावस्य जलस्वरूपत्वेन जलस्य च घ्राणेन्द्रियेण ग्रहासम्भवात्तद्वृत्तिगन्धाभावस्य प्रत्यक्षत्वमाधाराधेयभावश्च न स्यादितिवाच्यम्। जलस्यापि घ्राणेन्द्रियेण ग्रहसम्भवात्—गन्धाभावानापन्नजलस्य घ्राणेन्द्रियाग्राह्यत्वेऽपि गन्धाभावापन्नजलस्य घ्राणग्राह्यत्वे क्षत्यभावादन्यथा जलगन्धाभावप्रतीत्योरविशेषप्रसङ्गादाधाराधेयभावश्च क्वचित्कल्पनीयः इति तदुपपादनीय इतिसिद्धं वृत्त्यन्ताभावस्यचित्तस्वरूपत्वम्।९॥ निरुक्ताभ्यासस्य दार्ढ्योपायमाह—। "तत् पुनरि"ति।

तत् पुनर्दीर्घकालेन सत्कारासेवितंमुहुः।
दृढ़भूमि विरक्तिस्तु विषयेषु वितृष्णता॥१०॥

तदा पूर्वोक्ताभ्यसनपरामर्शः पुनरित्युत्पत्त्यनन्तरत्वमवगमयति। दीर्घकालेनेति दृढ़भूमीत्यनेनान्वयि। मुहुरिति नैरन्तर्य्यमवगमयति तथाच उत्पत्त्यनन्तरं नैरन्तर्य्येण सत्कारासेवितं तदभ्यसनं दीर्घकालेन दृढ़भूमि भवतीत्यर्थः। अयमभिसन्धिर्नैवंभूतमभ्यासंकृत्वोपरमेतान्यथादीर्घकालप्रवासेन तिरोभवत्ययमभ्यास इतिनोपरन्तव्यमभ्यासात्। दीर्घकाल नैरन्तर्य्यसत्काराणामत्र न विकल्पोऽभिमतोऽपितु समुच्चयोऽन्यथाकालदैर्घ्यनैरन्तर्य्याभ्यामन्तरेण सत्कारमात्रेणापि भवेद्दृढ़भूमिरभ्यासः। वैराग्यं दर्शयति। "विरक्तिरि"ति। यद्यपि विरक्तेर्वृत्तिर्बहिर्मुखताविच्छेदहेतुतया प्रथमोपादानं युक्तमभ्यासस्य

च वृत्त्यभ्यन्तरमुक्ततासाधनस्य पश्चात्तथापि तस्या दुःसाध्यत्वात्त द्विभागद्वारकत्वाच्चान्त उपादानम् । तल्लक्षणमाह । "विषयेष्वि" ति । दृष्टानुश्रविकविषयतृष्णाराहित्यमितितदर्थः । नच रोगग्रह-ग्रस्तस्यापि दृष्टानुश्रविकविषयवैतृष्ण्यसम्भवात्तत्रातिप्रसक्तमेत-दिति वाच्यम् । तस्य वैतृष्ण्यासम्भवात्—नहि रोगग्रहग्रस्तोविषय-वितृष्णोभवति रोगग्रहनिवृत्त्यनन्तरं तत्काले वा तदिच्छासत्त्वा-द्विषयवैतृष्ण्यंच विषयेच्छाविरहस्स तु तस्य नास्तीति न तत्राति-प्रसक्तिः । नच तथाप्यप्राप्तविषयस्य विषयस्पृहाऽसत्त्वात्तदवस्थे-वातिप्रसक्तिरिति शङ्क्यम् । विषयसंयोगेऽपीत्यस्यापि लक्षणे निवे-शनीयत्वात् । नह्यप्राप्तविषयस्य विषयसंयोगेऽपि भवन स्पृहाविर-होयथा विरक्तस्येतिविषयसंयोगेऽपि विषयवैतृष्ण्यमिति विरक्ति-लक्षणं पर्य्यवसन्नम् । १० ॥ यतमानादिभेदेन विरक्तेश्चातुर्विध्यं ब्रवीति—। "तस्या" इति ।

तस्याश्चसंज्ञाश्चतस्रस्स्युर्यतमानादिभेदतः ।
सा परा पुरुषख्यातेर्गुणेभ्योया वितृष्णता ॥११॥

तस्याः । विरक्तेरित्यर्थः । यतमानादीत्यत्रादिना व्यतिरेकैकेन्द्रिय वशीकाराणां परिग्रहः । चित्तवर्त्तिभीरागादिभिः कषायैरिन्द्रि-याणि विषयेषु प्रवर्त्तन्ते माप्रवर्त्तिषत विषयेष्विन्द्रियाणीति तत्प-रिपाचनायांयत्नो यतमानसंज्ञा—पक्वापक्वेष्विन्द्रियगणेष्वपक्वेभ्यः पक्वानां व्यतिरेकावधारणं व्यतिरेकसंज्ञा—सर्वाणीन्द्रियाणि पक्वा-नीत्यध्यवसेयन्द्रियाणामेकरूपतासम्पादनमेकेन्द्रियसंज्ञा—दिव्या-दिव्यविषयसम्प्रयोगेऽपि तत्र दोषपरिज्ञानादनाभोगात्मिका चित्त-वृत्तिर्वशीकारसंज्ञा यद्यपि वशीकारसंज्ञायामितरासांचारितार्थ्यं तथापि तासां पृथक्कीर्त्तनं बुद्धिवैशद्यार्थमितिध्येयम् । यतमाना-

दिभेदभिन्नमपरवैराग्यं लक्षयित्वा सम्प्रति पुरुषदर्शनाभ्यासजनितंतदोयोत्कृष्टं परेति संज्ञया व्यपदिशति"सापरे"ति। पुरुषख्यातिः पुरुषदर्शनात्। सा विरक्तिः। उत्कृष्टा सती परेत्युच्यते। औत्कृष्ट्यन्दर्शयति। "गुणेभ्य" इति। अयम्भावः दृष्टानुश्रविकविषयवितृष्णस्य व्यक्ताव्यक्तधर्म्मकेभ्योगुणेभ्योयत् पुरुषदर्शनाद्वैराग्यमुत्पद्यते तदुत्पद्यमानं सत्परमिति व्यपदिश्यत इत्युक्तं परापरभेदेन द्विविधं वैराग्यम् ॥ ११ ॥ पूर्वं 'निर्वीजः प्रथमश्चैक" इत्यत्र योऽसम्प्रज्ञातोनिर्वीजपदेन व्यपदिष्टस्सम्प्रति तल्लक्षण स्वरूपे निर्द्दिशति। "विरामेति"।

**विरामप्रत्ययाभ्यासपूर्वोऽन्यश्शिष्टवासनः।**

**विदेहाव्यक्तलीनानां समाधिर्भवकारणः।१२॥**

अन्य इति लक्ष्य निर्द्देशः। सम्प्रज्ञातभिन्नोऽसम्प्रज्ञात इति तदर्थः। अन्य इत्यतः प्राक् परिशिष्टं लक्षणम्। शिष्ट वासन इति तत्स्वरूप निर्देशः। अवयवार्थस्तु विरमणंविरामो वृत्तीनामभावस्तस्य प्रत्ययः कारणंपरवैराग्यं तस्याभ्यासः पौनः पुन्येनानुष्ठानं स पूर्वः कारणं यस्य सः। पर वैराग्योपायकत्व मसम्प्रज्ञातत्वमितिपर्य्यवसन्नम्। भवति ह्यसम्प्रज्ञातो निर्वस्तुकः परवैराग्यजन्यो निर्वस्तुकत्वात्परवैराग्यस्य, तस्माद्युक्तः परवैराग्यासम्प्रज्ञातयोः कार्य्यकारणभावः। शिष्टवासनः संस्कारशेष इत्यर्थः। नचाग्रे "संस्कारस्यापि संरोधे निर्वीजश्शास्त्रसम्मत" इत्यनेन सकल संस्कार निरोधे सत्यसम्प्रज्ञात स्वरूपस्य वक्ष्यमाणत्वात् पूर्वापरग्रन्थविरोध इति,शङ्क्यम्। अवस्था भेदाश्रयेण विरोधाभावात्-नायं पूर्वापरविरोधोभवितुमर्हति-असम्प्रज्ञातपूर्वावस्थायां संस्काराणां शेषेऽपि चरमावस्थायां सुतरां तेषामभावा-

न्नवेत्तदाऽयं विरोधः पूर्वापरग्रन्थस्याभ्युपगच्छामश्चेत्सकलाव-स्थायां संस्कार शेषत्वं तन्निरोधं वेति न तद्विरोधः । स खल्वयं द्विविधस्समाधिरविद्याकारणकःश्रद्धाद्युपाय पूर्वकश्चेति तत्राविद्या-हेतुको विदेहप्रकृतिलयानां समाधिरित्याह । "विदेहे" ति करणेषु लीनास्सन्तोदेहमन्तरेण य उपभुञ्जते ते विदेहाः । अव्यक्तमेवात्मतयाभिमत्य तस्मिन् लीना य उपभुञ्जते तेऽव्यक्त लीनाः । भवत्यस्मिन्निति भवोऽविद्या स कारणं यस्य स इत्यर्थः । भवकारणमितिपाठे भवस्य संसारस्य कारणं हेतुरि-त्यर्थः । १२ ॥ अन्येषां योगिनां श्रद्धाद्युपायपूर्वकस्समाधि-रित्याह । "इतरेषा" मिति ।

इतरेषां समाधिःस्याच्छ्रद्धाद्योपायपूर्वकः ।
आसन्नस्तीव्रवेगानां समाधिस्तत्फलन्तथा ॥१३॥

इतरेषां विदेह प्रकृतिलयव्यतिरिक्तानांयोगिनाम् । श्रद्धा-द्योपायाः । श्रद्धावार्यस्मृतिसमाधिप्रज्ञारूपाः पूर्वं कारणानि यस्य स इत्यर्थः । नचात्रश्रद्धाद्युपायानां विकल्पोभवेत्तदा विकल्पः श्रद्धाद्युपायानां कुर्य्युश्चेत्ते परस्परमनपेक्षमाणा अपि समाधिं नहि श्रद्धाद्यापाया अन्योन्यनिरपेक्षास्सन्तःसमा-धिंकर्त्तुं क्षमन्ते अन्यथा श्रद्धाद्येकैकोपायानुष्ठातॄणामपि समापत्तिप्रसङ्गः । नहि श्रद्धाद्येकैकोपायानुष्ठातारस्समाहित चेतसो दृश्यन्ते तस्मान्न विकल्पः श्रद्धाद्युपायानां समापत्ताव-पितु समुच्चयस्तथाहि—श्रद्धातो वीर्य्यं तस्मात्तुस्मृतः स्मृतेश्च समाधिप्रज्ञा । ततश्चैते सर्वे संभूय जनयन्ति समाधिमिति समुच्चयः श्रद्धाद्युपायानां समाधौ । नच वाच्यं भूतेन्द्रिय प्रकृति-चिन्तका अपि भवन्ति श्रद्धावन्तोनह्यश्रद्दधानाश्चिन्तायां प्रवर्त्तन्ते

यदि न ते श्रद्दध्युर्न चिन्तायांप्रवर्त्तेरन्नित्यस्तितत्समापत्तेरपि श्रद्धाद्युपायपूर्वकत्वमिति. चेतस्सम्प्रसादरूपायाःश्रद्धाया अभ्युपगमात्। नहि वयमिच्छामात्रं विश्वासमात्रं वा श्रद्धां ब्रूमहे येनेच्छादिमात्रेण भूताद्यात्माभिमानिनां भूतादिचिन्तकानां भूतादिसमापत्तेरपिस्याच्छ्रद्धाद्युपायपूर्वकत्वं किन्तु चेतस्सम्प्रसादं स चाभिरुचिस्सा च भूतादिचिन्ताजनितसुखेच्छापरिहारेणात्मसुखेच्छा नचैतादृश: सम्प्रसादोभूतेन्द्रियप्रकृतिचिन्तकानां भूताद्यात्माभिमानित्वात्तेषामसम्प्रदोहि स व्यामोहजनकत्वादिति न भूतादिचिन्तकानां समापत्तिः श्रद्धाद्युपायपूर्विका श्रद्धा कृतनिर्वचना। वीर्य्यमङ्गानुष्ठानोत्साहः। स्मृतिरनुष्ठिताङ्गाविस्मरणम्। समाधिप्रज्ञा विवेकज्ञानम्। अथ न श्रद्धाद्युपायानामुपायत्वं सम्यक् प्रतीयते भवेयुर्यदि सम्यक्-श्रद्धादयोयोगोपायास्तदा सर्वेषामेव श्रद्धाद्युपायानुष्ठातृणां भवेत्समाना सिद्धिः नहि सर्वेसमानसिद्धयोभवन्ति भवन्ति च केचिदासन्नसिद्धयोऽपरे चासन्नतरसिद्धयोऽन्ये चासन्नतमसिद्धय इति सिद्धिवैषम्यदर्शनान्न श्रद्धादोनांसम्यगुपायत्वमित्यत आह। "आसन्न" इति। वेग-उपायानुष्ठाने शैघ्र्यम्। उपायानुष्ठान शैघ्र्यवतामासन्नस्समाधिर्भवतीत्यर्थः। वेगोवैराग्यमितिकेचित्। अयमभिसन्धिः। आसन्नासन्नतरासन्नतमत्वभेदभिन्नास्त्रिविधा योगिनो मृदुमध्यतीव्रभेदेन नवविधा भवन्ति तद्यथा मृद्वासन्नवान् १ मध्यासन्नवान् २ तीव्रासन्नवान् ३ मृद्वासन्नतरवान् ४ मध्यासन्नतरवान् ५ तीव्रासन्नतरवान् ६ मृद्वासन्नतमवान् ७ मध्यासन्नतमवान् ८ तीव्रासन्नतमवान् ९ मृदुत्वादयोविशेषाश्चोपायगतस्मृदुत्वादि प्रयोज्या इत्युपायवैचित्र्यात् सिद्धिवैचित्र्यं ततश्च श्रद्धाद्युपायकृत्वेपि न सर्वेषां समाना सिद्धिः। १२॥ समाधेरन्यान् विशेषान् सूचयितुमाह। "मृद्वि"ति।

**मृदुमध्याधिमात्रत्वाद्विशेषास्स्युस्ततोऽपि च।**
**ईश्वरप्रणिधानाद्वाऽऽसन्ने समाधितत्फले ।१४॥**

मृदुमध्याधिमात्रभेदैरुपायानांभेदात्तदनुष्ठातृयोगिनामपि भेदा भवन्तीति फलितोऽर्थः। तथाहि मृदुमृद्वासन्नवान् १ मध्यमृद्वासन्नवान् २ अधिमात्रमृद्वासन्नवान् ३ मृदुमध्यासन्नवान् ४ मध्यमध्यासन्नवान् ५ अधिमात्रमध्यासन्नवान् ६ मृद्वधिमात्रासन्नवान् ७ मध्याधिमात्रासन्नवान् ८ अधिमात्राधिमात्रासन्नवान् ९ मृदुमृद्वासन्नतरवान् १० मध्यमृद्वासन्नतरवान् ११ अधिमात्र मृद्वासन्नतरवान् १२ मृदुमध्यासन्नतरवान् १३ मध्यमध्यासन्नतरवान् १४ अधिमात्र मध्यासन्नतरवान् १५ मृद्वधिमात्रासन्नतरवान् १६ मध्याधिमात्रासन्नतरवान् १७ अधिमात्राधिमात्राधिमात्रासन्नतरवान् १८ मृदुमृद्वासन्नतमवान् १९ मध्यमृद्वासन्नतमवान् २० अधिमात्र मृद्वासन्नतमवान् २१ मृदुमध्यासन्नतमवान् २२ मध्यमध्यासन्नतमवान् २३ अधिमात्र मध्यासन्नतमवान् २४ मृद्वधिमात्रासन्नतमवान् २५ मध्याधिमात्रासन्नतमवान् २६ अधिमात्राधिमात्रासन्नतमवान् २७ इति भेदेन सप्तविंशतिविधा योगिनो भवन्तीत्युक्तः श्रद्धाद्युपायपूर्वकःसमाधिः। उपायान्तरमाह। "ईश्वरे"ति। ईश्वरप्रणिधानात्। ईश्वरभक्तिविशेषात्। समाधिस्तत्फलञ्च भवतीत्यर्थः। प्रणिध्यायमानः परमेश्वर इदमस्य भवत्विति सङ्कल्पमात्रेणानुगृह्णाति न व्यापारान्तरेणेति ततस्समाधिस्तत् फलं च चिप्रं योगिनोजायतइति तात्पर्य्यम्। १४॥

अथ कोयं प्रधानपुरुषेभ्योऽतिरिक्त ईश्वरायत्प्रणिधानात् समाधितत्फलयोरासन्नत्वमुच्यत इत्यतआह। "अपरामृष्टमिति"॥

अपरामृष्टमेवाहुर्विपाकैः क्लेशकर्म्मभिः ।
ईश्वरं पुरुषं प्राज्ञा वासनाभिस्तथैव च ॥१५॥

विपाका जात्यायुर्भोगाः कर्म्मफलानि त्रीणि । क्लेशाः-अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च कर्म्माणि शुक्ल कृष्ण-शुक्लकृष्णाशुक्लकृष्णानि चत्वारि वासनाः विपाकानुगुणाः संस्काराः । एभिः-अपरामृष्टमसम्बद्धंरहितं पुरुषमेव प्राज्ञाः बुद्धिमन्तोयोगविदः । ईश्वरम् । आहुर्वदन्तीत्यर्थः । तल्लक्षणं च त्रैकालिकबन्धशून्यत्वं बन्धशून्यत्वमात्रोक्तौ मुक्त प्रकृति लयेष्वतिव्याप्तिरितित्रैकालिकत्वं बन्धविशेषणं तथाच मुक्तेषु भूतबन्धस्य प्रकृतिलयेषु भाविबन्धस्य च सत्त्वात् न तत्रातिव्याप्तिरीश्वरस्य तु त्रैकालिकबन्धशून्यत्वात्तत्र लक्षणसमन्वयः । ते हि न त्रैकालिकबन्धविरहिणो भवितुमर्हन्ति क्लेशादि संसर्गित्वान्नहि प्रागनन्तरं सम्प्रति वा क्लेशाद्यैः परामृष्टास्त्रैकालिकबध्यशून्या स्तथाच मुक्तानां भूतोबन्धः प्रकृतिलयानां च भाव्यऽस्मदादीनांतु त्रैकालिक एवेति न बन्धविरहिणो भवन्तीश्वर व्यतिरिक्ता बद्धा मुक्ताश्च नचेश्वरव्यतिरिक्तपुरुषाणामप्यसङ्गत्वश्रुतेर्नास्ति कदाचिदपि क्लेशादि परामर्शरूपोबन्ध इति साम्प्रतम् । असङ्गिन्यपि पुरुषे बन्धव्यपदेशसम्भवात्-यथा योद्धृपुरुष गतौ जयपराजयौ स्वामिनि व्यपदिश्येते तथा मनोगतोपि तत्स्वामिनि पुरुषे व्यपदिश्यते बन्धः । युक्तश्चैतादृश एव बन्धस्तस्य निवृत्ति सम्भवान्नहि स्वाभाविकोबन्धः पुरुषे भवितुमर्हस्तस्यनिवृत्त्यसम्भवान्नहि स्वभावात्कश्चिदपसरति नहि वह्निस्स्वभावमौष्ण्यं जहाति यदि स्यात् पुरुषाणां स्वाभाविकोबन्धस्तर्हिकश्चिदपि न मुच्येतेति न स्वाभाविकोबन्धः । अथ यस्य नास्ति स्वाभाविको-

बन्धस्य किम्प्रतिचित्तमेकोऽनेकोवेति वक्तव्यंनैकोभवितुमर्हति प्रतिचित्तं तस्मिन्नेकस्मिन्नभ्युपगम्यमान एकस्यान्धत्वे भवेयुस्स-र्वेऽन्धा बधिरत्वेच बधिराः म्रियमाणे चैकस्मिन् सर्वे भवेयुर्मृता-जायमाने च जाता इति नैतद् दृश्यते तस्मान्नैकः प्रतिचित्तं पुरुष इत्यनेकत्वपक्ष एव निर्दुष्टत्वात्परिशिष्टः । न च वाच्यमेक एव पुरुषः प्रतिचित्तम्—उपाधिभेदेनापि नानात्वव्यवहार सम्भवादिति, उपाधिभेदस्य नानात्वव्यवहाराप्रयोजकत्वान्नहि किरीट कुण्ड-लाद्युपाधिभेदेन देवदत्तो नाना भवति नाना चेत्स्यात्किरीटाद्यु-पाधि विगमे नायं देवदत्त इत्यपि व्यवहारस्स्यान्नायं व्यवहार-स्सम्भवति तस्मान्नोपाधिभेदेन पुरुषनानात्वम् । ननु प्रधानादि पञ्चविंशति तत्त्वानि प्राचीनसम्मतानि कथं षड्विंशःक्लेशकर्म्माश-यैरपरामृष्टः परमेश्वर उच्यत इति चेन्न संसाराङ्गारेषु तप्यमानानां प्राणभृतामनुग्रहार्थं षड्विंशतत्त्वस्य परमेश्वरस्य स्वीकारात्— नहि संसाराङ्गारेषु भृशमुपतप्यमानाः प्राणभृतः परमेश्वरानुग्रह-मन्तरेण द्राक्तापान्*व्यासेद्धुं क्षमन्ते तेनानुग्राहकतया परमेश्वरः स्वीक्रियते स च स्वेच्छया निर्म्माणकायमधिष्ठाय लौकिक वैदिक सम्प्रदायप्रवर्त्तकः संसाराङ्गारपरितप्यमानप्राणिवर्गानुग्राहक-स्यातोऽस्तिषड्विंशः परमेश्वरः । न च पुष्करपलाशवन्निर्लेपस्य पुरुषस्य ताप एव नास्ति कथं तदनुग्राहकतया परमेश्वरोऽभ्युप-गम्यतेति, तापकस्य रजसस्सत्त्वमेव तप्यं बुद्ध्यात्मना परिणमत इतिसत्त्वे तप्यमाने तमोवशेन तदभेदग्राहिणः पुरुषस्यापि ताप-सम्भवात्तथाचोक्तं भगवता पतञ्जलिना "अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्ति-मनुभवती"ति तथाच शुद्धोपि पुरुषो बौद्धंप्रत्ययमनुपश्यन्नतदा-त्मापि तदात्मक इव भासते इति परितप्यमानपुरुषस्य परमेश्वर

* दूरीकर्त्तुम् ।

प्रणिधानेन सत्त्वपुरुषान्यताख्यातावनुपपन्नवायां जातायामविद्या-दयः पञ्चक्लेशास्समूलकाषंकषिता भवन्ति कुशलाकुशलाश्च कर्म्मा-शयास्समूलघातंहता भवन्ति ततश्च पुरुषस्य पुष्करपलाशवन्नि-र्लेपस्य बौद्धप्रत्ययानुकारितामपरित्यज्य स्वरूपेण कैवल्यात्मना-वस्थानमित्यावश्यकः प्रणिधानानुग्राहकः षड्विंशः परमेश्वरः। षड्विंशतितत्त्वानि च प्रकृतिर्महदहङ्कारौ—एकादशेन्द्रियाणि पञ्चतन्मात्राणि पञ्चमहाभूतान्याकाशादीनि पुरुषपरमेश्वरौ चेति लक्षितः परमेश्वरः ॥१५॥ एवमीश्वरस्वरूपमभिधाय तत्सिद्धयेऽनु-मानं दर्शयति। "अतीतानागते"ति।

अतीतानागतज्ञानं वर्द्धमानं क्रमादपि।

स्यान्निरतिशयं यत्र स सर्वज्ञ उदाहृतः ॥१६॥

अल्पंवह्निति क्रमाद्वर्द्धमानमिदमतीतानागतविषयकंज्ञानं यस्मिन्निरतिशयं समाप्ततारतम्यं भवेत्स सर्वज्ञ ईश्वर उदाहृतः। नच वाच्यं वर्त्तमानविषयकज्ञानाग्रहणान्न तस्य तारतम्यं कुत्रचित् समाप्नोतीति, स्थूलयाह्विवर्त्तमानविषयकज्ञान तारतम्यस्य सुप्रसिद्धत्वेन तस्येह कण्ठतोऽनिर्वचनात्। यदि-चातीन्द्रिय विषयक वर्त्तमानज्ञानस्य नास्तिस्थूलग्राह्वित्वं तद्विषयस्यातीन्द्रियपदार्थस्य स्थूलत्वाभावादिति तदग्रहणात्त-दवस्थोदोष इत्युच्यते, तदाऽतीतानागतेत्यस्योपलक्षणत्वेन वर्त्तमानस्यापि ग्रहणान् न दोषस्तथाचातीतानागतवर्त्तमान-विषयाणां क्रमतस्समुच्चयेन वा ग्रहणं यस्मिन् समाप्नोति स सर्वज्ञ ईश्वर इतिस्थितम्। तथाचानुमानं ज्ञानतारतम्यं क्वचिल्लब्ध-समाप्तिकं सातिशयत्त्वात्-परिमाणतारम्यवत्। यथा परिमाण-तारतम्यं वर्द्धमानंसद्गगनादौ विश्राम्यति तद्वत्तत्र वर्धमानं ज्ञान-तरम्यं विश्रान्तंसोऽस्मदादीनां बाधादीश्वरस्सर्वज्ञोभवितुमर्हति।

इतरविशेषबाधनिश्चयलाघवप्रतिसन्धानवशेन व्यापकतानवच्छेदकीभूतधर्म्मावच्छिन्नविधेयताकानुमितेरपि सर्वसिद्धत्वादिति सर्वज्ञेश्वर सिद्धिः ॥१६॥ अथैतेनानुमानेनाष्टाङ्गयोगप्राप्तैश्वर्य्यः कश्चिद्योगी हिरण्यगर्भो वा सेत्स्यतीत्यत आह । "स" इति ।

**स कालेनानवच्छेदात् पूर्वेषान्तु गुरुर्मतः ।**

**वाचकः प्रणवस्तस्य तदर्थभावनं जपः ॥१७॥**

नह्यष्टाङ्गयोगप्राप्तैश्वर्य्योयोगी हिरण्यगर्भोवाऽनेनानुमानेन सेद्धुमर्हति हिरण्यगर्भादीनामपि तदनुग्रहेणैश्वर्य्यप्राप्तिश्रुतेर्नहि तस्यास्ति कस्यचिदनुग्रहेणैश्वर्य्यप्राप्तिस्स्वतस्सिद्धज्ञानैश्वर्य्यबलसम्पन्नत्वात्साम्यातिशयातीतत्वाच्च तथाच श्रुतिः "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञान बलक्रियाचे"ति स्मृतिश्च—"पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् । न त्वत्समोस्त्यभ्यधिकः कुतोन्यो लोकत्रयेऽप्यप्रतिमस्वभाव"इति । स एव कालेनानवच्छेदात् सर्वज्ञस्स्वतस्सिद्धैश्वर्य्यो नहि स केनचिदप्यवच्छिद्यते कालेन दिशा वा, अवच्छिद्यन्ते हि हिरण्यगर्भादयः कालादिनेति न कालाद्यवच्छिन्नास्सर्वज्ञेश्वराभवितुमर्हन्तिते । अतएव स हिरण्यगर्भादीनां गुरुर्यद्यवच्छिन्न्यादस्मपि कालस्तर्हि स सर्वज्ञोऽपि सन् कथं हिरण्यगर्भादीनांभवेद्गुरुरिति न हिरण्यगर्भादयस्सर्वज्ञास्स्वतस्सिद्धैश्वर्य्या वा यतस्तेषु ज्ञानतारतम्यविश्रान्तिस्स्वीक्रियेत निरुक्तानुमानेनेतिचतुरचेतस एव चेतसि चातुर्य्येण विचारयन्त्यिति चतुरस्त्रम् । तद्वाचकं शब्दमाह । "वाचक" इति । तस्य सर्वज्ञेश्वरस्य वाचकोयोऽयमोङ्कारस्तेनाहूतोभगवान् सत्वरं प्रणिधानमात्रेणैवानुगृह्णाति प्रणिध्यायिनं तस्मादोङ्कारजप एव तदर्थस्येश्वरस्य भाव-

नम् ॥ १७ ॥ सर्वज्ञसर्वेश्वरकालाद्यनवच्छिन्नपरमगुरोरीश्वर-स्यैव वाचकः प्रणवशब्द इत्यभिधाय सम्प्रति निरुक्तेश्वरप्रणिधान-स्यान्तरायापगमे प्रत्यक्चेतनाधिगमे चोपायत्वं निर्दिशति । "अभावश्चे"ति ।

अभावश्चान्तरायाणां स्वरूपाधिगमोऽप्यतः ।

चोऽत्रावधारणे भिन्न क्रमश्च-"अत" इत्यस्यानन्तरमन्वेति ईश्वरप्रणिधानादेव व्याधिप्रभृतीनामन्तरायाणां निवृत्तिस्सम्भ-वति नोपायान्तरात् । नचोपायान्तरमन्तरायानुच्छेत्तुमीष्टे येन नेश्वरप्रणिधानमपेक्ष्येत उपायान्तरस्य तन्निवर्त्तकत्वेऽपि न तन्निवृत्ता अन्तरायायोगोत्पत्तौक्षमन्ते उपायान्तरनिवृत्ता-नामन्तरायाणांपुनरप्युत्पादसम्भवात्—नह्नीश्वरप्रणिधाननिवृत्ता अन्तरायास्समुत्सहन्ते पुनरुत्पत्तुमितीश्वरप्रणिधानमेवान्तराया-पायक्षमम् । नच वाच्यमीश्वर प्रणिधान निवृत्तानामप्यन्तरायाणां स्यान्नामपुनरुत्पाद इति, योगाङ्गानुष्ठान जनित विवेक ख्याति प्रनष्टमूलकत्वेन तेषां पुनरुत्पादासम्भवान्नहि प्रनष्टमूलको ह्युत्पद्यतेऽतिप्रसङ्गात्तस्मान्नोपायान्तरप्रनष्टान्तरायवत्प्रणिधान प्रनष्टान्तरायाणामुत्पादसम्भवः । नचोपायान्तर प्रणाश्यान्तरा-याणामपि योगाङ्गानुष्ठानजनितविवेकख्यात्यग्निना दाहसम्भ-वात्तेषामपि पुनरनुत्पत्तिस्समानैवेति वाच्यम् । स्वोक्तत्वात् —योगांगानुष्ठान जनित विवेकख्यात्यग्निदग्धमूलकत्वेऽपि तेषामीश्वर प्रणिधानसमनन्तरयोगांगानुष्ठानजिनितविवेकख्यात्य ग्निदग्धमूलकत्वेन सततमुपकारकत्वात्—नह्नि यथेश्वर प्रणिधान समनन्तरयोगाङ्गानुष्ठानजनितविवेकख्यात्यग्निदग्धबीजभावाना-मन्तरायाणामुपकारकत्वं तथेतरोपायप्रनष्टानामिति युक्ता मीश्व-रप्रणिधानस्यैव समूलस्याधिप्रभृत्यन्तरायनाशकत्वम् । अतः

—अस्मादीश्वर प्रणिधानात् । स्वरूपस्य प्रत्यक् चेतनस्य-अधिगमः—साक्षात्कारोऽपि सम्भवतीत्यर्थः । अथ विरुद्धमिदमुच्यत-ईश्वरप्रणिधानात् स्वरूपाधिगमोभवति प्रणिधानाधिगमयोरेकविषयकत्वदर्शनान्नह्यन्यविषयकं प्रणिधानमन्याधिगमायालं भवत्यन्यथा स्यान्मैत्र विषयक प्रणिधानेनापि चैत्राधिगमस्तस्मा-ऽश्वरप्रणिधानस्य स्वरूपाधिगमोपायत्वम् । न च माभूदीश्वर प्रणिधानं स्वरूपाधिगमोपाय उपमानेन तज्ज्ञानं भविष्यत्येव यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलोऽनुपसर्गस्तथायमप्यात्मेति वाच्यम् । उपमानस्यैवाऽसिद्धत्या तेन पुरुषोपमितेरसम्भवात् । किन्तदुपमानं येन पुरुषावगम उच्यते किं सादृश्यस्मरणं किं वा सादृश्यानुभवः नाद्यस्तद्धंसप्रत्यक्षयोरपि तज्जन्यत्वेनोपमितित्वापत्तेः । द्वितीयश्चेत्—किं सादृश्यप्रत्यक्षमुपमान मुतसादृश्यानुमितिराहोस्वित्सादृश्योपमितिः सादृश्यबोधो वा तत्राद्ये कीदृशं तद्यदुपमानत्वेनाभिमतं चक्षुरादीन्द्रियसंसर्गिणि गवये गोसादृश्य-प्रत्यक्षमितिचेत्तर्हि गवये गोसादृश्यं गवि च गवय सादृश्यं भिन्नमभिन्नं वा भिन्नमितिचेत्—न तत्सादृश्यम्भवितुमर्हति भूयसामवयवानां समानसंसर्ग एव सादृश्यं स चेद्गोगवययोर्भिन्नः कथं सादृश्यं भवेदिति सादृश्यसम्पत्तये समान एव वक्तव्यस्स-मानश्चेत्कथं तद्विषयं ज्ञानमुत्पद्यमानं भिन्नं भवेदितियद्गोगवय-योस्सादृश्यप्रत्यक्षं तदेकमेव वाच्यं तथाच तादृशप्रत्यक्षानन्तरं गवयोयमितिवद्गोरप्युपमितिस्स्यात्रह्वि तादृश सादृश्यप्रत्यक्षानन्तरं गवयोयमितिवद्गोरप्युपमितिः कस्यचिदभिमता येन गवयोप मितिवद्गोरप्युपमितिः स्वीक्रियेत तादृशप्रत्यक्षस्योपमितिकरण-त्वाङ्गीकारे च गवयोपमितिवद्गोरुपमितिरप्यावश्यकीति न गवये चक्षुस्संनिकृष्टेगोसादृश्यप्रत्यक्षमुपमानम् ॥ नापि सादृश्यानुमिति-रुपमानम् सा च गवयो गोसदृशय इत्याकारैव वाच्या न सोपमानं

भवितुमर्हति । तद्वंसप्रत्यक्षयोरप्युपमितित्व प्रसङ्गात् । किञ्च गवयमपश्यतोऽपि पुरुषस्य गोसादृश्यानुमितिसम्भवेन तदनन्तरमप्युपमितिस्स्यान्नैतद्भवितुमर्हति गोसादृश्यानुमितिर्व्याप्तिग्रहपूर्वकत्वेनेतितदनन्तरमेव गोसदृशोगवय इति ज्ञान सम्भवात् ज्ञातमनुमित्यात्मकेनोपमानेन । नाप्युपमितिरुपमानम् । तस्यास्स्वात्मकोपमितिम्प्रतिकरणत्वे-आत्माश्रयः । उभयोरन्योन्यम्प्रतिकरणत्वेऽन्योन्याश्रयः करणभूतोपमितिरप्युपमित्यात्मककरणत्वाङ्गीकारे तस्याप्युपमित्यन्तरं वक्तव्यमित्यनवस्था प्रसज्येत न च करणभूतोपमितेर्न करणमुपमित्यन्तरमन्यदपेक्ष्यत इत्यपि शक्यं वक्तुं तथासत्युपमितिःसकरणात्वव्याघात इति नोपमितिरप्युपमानम् ॥ नापि सादृश्यबोधस्योपमानत्वं तस्य च शक्तपदजन्यतया गोसदृशोगवयपदवाच्य इति शक्तिग्रहकाल एव गवयबोधसम्भवादितिव्यर्थं सादृश्यबोधस्योपमिति करणत्वमिति न तद्बोधोऽप्युपमानम् । उपमानासिद्धौच कथमुपमानेन पुरुषाधिगमसम्भवः । अत्रोच्यते नान्यतरमात्रविषयकं चिन्तनमन्यतरमात्र साक्षात्काराय भवतीति ब्रूमहे किन्तु सामानार्थानुचिन्तनं समानार्थान्तरसाक्षात्कारायेति, एकशास्त्राभ्यास इव सदृशार्थकशास्त्रान्तरबोधायेतीश्वरप्रणिधानं भवति पुरुषसाक्षात्कारायेति न निरुक्तो भवत्ययं दोषः । चेत्स्यातामीश्वर पुरुषावत्यन्तविधर्म्माणौ भवेत्तदायंदोषो नह्यत्यन्तविधर्म्माणावीश्वर पुरुषौ सम्मतौ कस्यापि, अत्यन्त विधर्म्मिणोरन्यतरार्थानुचिन्तनन्तु न तदितरस्य साक्षात्कारायालमितिसर्वसम्मतम् । तस्मात्सिद्धमीश्वर प्रणिधानस्य पुरुषाधिगमहेतुत्वम् । नच वाच्यमस्ति चेत्मैत्रयोरपि पुरुषत्वेन सादृश्यमितिचैत्रप्रणिधानेनापि मैत्रसाक्षात्कारस्स्यादिति, तादृशधर्म्मेण सादृश्यमभिदधतः प्रमेयत्वादिना घटादेरपि पुरुष सादृश्यसम्भवाद् घटप्रणिधानेनापि पुरुषाधिगमः प्राप्नोतीति

साद्दश्यमात्रस्य तत्राकिञ्चित्करत्वं नच साद्दश्यमात्रस्याकिञ्चित्-करत्वे कथं समानशास्त्राभ्यासन्यायेनेश्वरप्रणिधानस्य प्रत्यक्‌चे-तनाधिगमहेतुत्वसम्भव इतिवाच्यम् । स्वसमानजातीयस्वोत्-कृष्टप्रणिधानाभ्यासयोरेव समानजातीयान्तरावगमकत्वात् ॥ नहि चैत्रोमैत्रसमानजातीयस्सन्नपि मैत्रादुत्कृष्टोभवितुमर्हति दुःखित्वादिना साम्यात्तस्मान्न चैत्रप्रणिधानमीश्वरप्रणिधानमिव मैत्राधिगमं निर्वर्त्तयितुमीष्टे । ईश्वरप्रणिधानं चेष्टे प्रत्यक् चेतनमधिगमयितुमीश्वरस्य पुरुषसमानजातीयत्वेन निर्दुःख-त्वादिना तदुत्कर्षात् । एवं स्वोत्कृष्टस्वसमानजातीय शास्त्रा-भ्यासस्यापि समानजातीयशास्त्रान्तरबोधकत्वं सिद्धं, दृश्यते खलु चैवं लोके स्वोत्कृष्टस्वसमानजातीयशास्त्राभ्यासतत्परा एव शक्यन्ते समानजातीयंशास्त्रान्तरमवगन्तुमितिसम्यगुक्तमीश्वर प्रणिधानस्य प्रत्यक्‌चेतनाधिगमहेतुत्वं, नच वाच्यमीश्वर प्रणि-धानेनेव मुक्तविषयप्रणिधानेनापि स्वरूपाधिगमप्रसङ्गस्तेषामपी-श्वर इव स्वोत्कृष्टत्वात् । इष्टापत्तेः । इष्टं चैतदस्माकं यथेश्वर प्रणिधानस्य स्वरूपाधिगमहेतुत्वमेवमेव मुक्तप्रणिधानस्यापीयान् परोऽनयोर्विशेष ईश्वर प्रणिधानस्य साक्षात्स्वरूपाधिगमकत्वं-मुक्तप्रणिधानस्य तु मनः स्थितिरूपद्वारेणेत्यमुमेवार्थमभिप्रयन् सूत्रयांचकार भगवान् पतञ्जलिरपि "वीतरागविषयं वा चित्त-मि"ति । ईश्वरप्रणिधानस्यान्तरायापगमकत्वं स्वरूपाधिगमकत्व-ञ्चाभिधाय सम्प्रति समाधेरन्तरायान्दर्शयति—"व्याधिरिति"—

**व्याधिस्त्यानप्रमादाश्च संशयोभ्रान्तिदर्शनम् ॥१८॥**

**आलस्याविरतौ चैवं भूम्यलाभानवस्थितौ ।**

**नवैते चित्तविक्षेपा योगिनां योगबाधकाः ॥१९॥**

तत्र व्याधिर्नाम धातुवैषम्यनिबन्धनमस्वास्थ्यम् । तेषां साम्ये

स्वास्थ्यादर्शनात्—साम्यञ्चात्र शरीरधारणक्षमत्वरूपमभिमतम-न्यथा शरीरधारणस्यैवासम्भवात्सुस्पष्टञ्चैतच्चक्रादिनिबन्धेष्विति विशेषस्तत एव विज्ञेयः। स्त्यानं चित्तस्याकर्म्मण्यता समाधि-साधनेष्वौदासीन्यं प्रमादः। संशयः-उभयकोटिस्पृग् ज्ञानम्-भ्रान्ति-दर्शनं विपर्य्ययः—कायचित्तयोर्योगाङ्गविषयप्रवृत्तिप्रतिबन्धक-स्तमः परिणामविशेषः-आलस्यम्। अविरतिर्विषयेष्वासङ्गः—भूम्यलाभः—समाधिभूमीनां मधुमत्त्यादीनामप्राप्तिः। एते नव-विक्षेपास्तद्बाधनार्थं प्रणवादिपवित्रमन्त्राणां जपःकर्त्तव्यः यतस्ते न योगबाधकाभवेयुः ॥ १८ ॥ १९ ॥ सम्प्रति विक्षेपसहो-दरान्दर्शयति—। "प्रश्वासेति"—।

**प्रश्वासश्वासदुःखानि दौर्मनस्यांगवेपथू।**

**भवन्ति क्षिप्तचित्तस्य विक्षेपसोद्भवास्त्विमे ॥२०॥**

कोष्ठगतवातस्य वहिर्निस्सरणं प्रश्वासः। तस्यैव पुनराचमनं श्वासः। अननुकूलवेदनीयं दुःखं सुखप्रतिद्वन्द्वि भावविशेषः। तच्च त्रिविधमाध्यात्मिकाधिभौतिकाधिदैविकभेदात्। तत्राधिदै-विकं नाम यक्षराक्षसग्रहाद्यावेशजनितम्। आधिभौतिकंच पशुपक्षिसरीसृपस्थावर जनितम्। तदेतद्द्विविधं दुःखं वाह्योपाय जनितम्भवति। आध्यात्मिकं दुःखन्त्वान्तरोपाय साध्यम्—आन्तरोपायाश्च वात पित्त श्लेष्म काम क्रोध लोभ मोह भयेर्ष्या विषाद संशयाः। काम इच्छा विषयाप्राप्तौ चित्त सन्तापः क्रोधः विषयलाभेऽपि चेतसोऽसन्तोषोलोभः। विपर्य्यय-ज्ञानं ज्ञानव्यतिरेको वा मोहः विषयविशेषदर्शननिबन्धनं चेतसोऽनवस्थानम्। आगामिदुःखोत्प्रेक्षणं वा भयम्। परोत्क-र्षासहनमीर्षा। अविज्ञातहेतुकश्चिन्ताविशेषोविषादः। संशयः पूर्वमुक्तः। एतदान्तरोपायसाध्यमाध्यात्मिकं दुखं द्विविधं शारीरं

मानसं चेति शारीरं वातादिवैषम्यनिबन्धनं मानसं कामेर्षादिजनितं यद्यपि सर्वं दुःखंमानसमेव तथापि मनोमात्रजन्यत्वाजन्यत्वाभ्यां तद्विभागः। यद्वा अध्यात्मश्चक्षुरादिकमिन्द्रियम्—अधिभूतं तदधिष्ठानं गोलकम्—अधिदैवं तदभिमानिन्योदेवताः। एतद्वैकल्यनिबन्धनं दुःखमाध्यात्मिकादिभेदेन त्रिविधमुच्यते। इच्छाभिघाताच्चेतसः क्षोभोदौर्मनस्यम्। अङ्ग वेपथुरङ्गेषु कम्पा यतश्चेमे प्रश्वासादयः विक्षेपसहोदरा अतोविक्षिप्तचित्तस्यैवैते भवन्ति न समाहित चित्तस्येति विक्षेपबाधनार्थं योगिना द्राग्यतितव्यम् ॥२०॥ अभ्यास विषयोपसंहारव्याजेन समाधिप्रतिपक्षविक्षेपप्रतिक्षेपोपायमाह—।"विक्षेपेति"—।

विक्षेप प्रतिषेधार्थमेकतत्त्वावलम्बनम्।
चित्तमेवाभ्यसेद्योगी सौहार्दादींश्च भावयेत् ॥२१

यथा चैते विक्षेपा न स्युस्ततो योगिनैकस्मिन्नभिमततत्त्वे-चित्तमभ्यस्तव्यम्। विक्षेप प्रतिक्षेपोपायमुपन्यस्य चित्तप्रसादोपायमभिधत्ते। "सौहार्दादींश्चेति"। आदिनाऽव्यवहितोक्तकारिकापठिताः करुणामुदितोपेक्षा गृहीतव्याः ॥२१॥ भावनाक्रमन्दर्शयति। "सौहार्दीमिति"।

सौहार्दीं सुखयुक्तेषु करुणां दुःखितेष्वपि।
मुदितां पुण्यशीलेषूपेक्षामपुण्यकर्मसु ॥२२॥

स्पष्टम् ॥२२॥ ननु भावनायाश्चित्तवृत्तिविशेषरूपत्वेन स्वविरोधिवृत्त्यनुदयपर्य्यन्तं कथञ्चित्प्रसादजनकत्वेऽपि स्वनिरोधानन्तरन्तदजनकत्वात् कथं प्रसादोपायत्वमित्यत आह। "एवमिति"।

एवम्भावयतस्तस्य धर्मः शुक्लोऽभिजायते ।
प्रसीदन्ति ततश्चित्तमेकाग्रमवतिष्ठते ॥२३॥

अयमाशयः । वृत्तिविशेषरूपाया भावनाया अस्थिरत्वेऽपि तज्जनितस्य प्रसादजनकस्यातिशयविशेषस्य चरमफलपर्य्यन्तं स्थायित्वाभ्युपगमेन तद्द्वाराभावनाया अपि प्रसादहेतुत्वसम्भवादिति भावनायां प्रसादोपायत्वमच्यतम् ॥ २३ ॥ प्रकारान्तरेण चित्तस्थितिमाह । साधयेदिति ।

साधयेत् प्राणवायोर्वा प्रच्छर्दन विधारणे ।
स्याद्विषयवती जाता प्रवृत्तिस्स्थितिकारणम् ॥२४

कोष्ठगतस्य वायोः प्रयत्नविशेषाद्बहिष्करणं प्रच्छर्दनं कोष्टगतस्य वायोः प्रयत्नविशेषान्निरोधो विधारणम् । नच प्राणस्य शरीरान्तस्सञ्चारिवायुविशेषरूपत्वेन तत्प्रच्छर्दनविधारणयोः कथं मनस्स्थितिसम्पादकत्वं मनसाऽसम्बद्धत्वात्प्राणस्य, नह्यसम्बद्धः प्रवृत्तये स्थितये वा कल्पते तस्मान्नप्राणप्रच्छर्दविधारणयोर्मनस्स्थितिनिबन्धनत्वमितिवाच्यम्—अन्तःकरणवृत्तित्वाभ्युपगमात्—नहि वयं प्राणं वायुविशेषं मन्यामहे येन तत्प्रच्छर्दन विधारणयोर्मनस्स्थितिनिबन्धकत्वन्नस्यादपि तु चित्तसामान्यवृत्तितद्भावे भावात्तदभावेचाभावात् तथाच प्राणस्य चित्तवृत्तिसामान्य रूपत्वेन तत्र सम्बद्धत्वात्तत्प्रच्छर्दन विधारणाभ्यां मनस्स्थितिर्न विरुद्धा स चैकोपि स्थानभेदात्प्राणादिव्यपदेशभाग्भवति । तत्र प्राणोनासाग्रहृन्नाभि पादांगुष्ठ वृत्तिः । अपानः कृकाटिका पृष्ठपादपायूपस्थ पार्श्ववृत्तिः । समानो हृन्नाभि सर्वसन्धिवृत्तिः । उदानोहृत्कण्ठतालु मूर्द्धभ्रू मध्य वृत्तिः व्यानस्त्वग्वृत्तिः । तथाचोक्तम् "हृदि प्राणो गुदेऽपानस्समानोनाभिसंस्थितः । उदानः

कण्ठदेशस्थोव्यानस्सर्वशरीरगः" । नचात्रैकैकस्थान निर्देशात्प्रत्येकं प्राणादीनामनेकस्थानकथनमनुचितमिति, विशेषस्थानाभिप्राये-णैवैकैकस्थानस्यात्र सङ्कीर्त्तनात्—नच प्राणवायोश्चित्तसामान्य वृत्तित्वस्य वृद्धानभिमतत्वेन त्वयैव कल्पितं सामान्यवृत्तित्वमिति वाच्यम्—वृद्धैरप्येवं प्रणयनात् तथाचोक्तमोश्वर कृष्णैः । "स्वाल-चण्यं वृत्तित्रयस्यैषा भवत्यसामान्या ॥ सामान्यकरणवृत्तिः प्राणादयोवायवः पञ्च"ति विषयवती वा प्रवृत्तिरुत्पन्नामनसस्-स्थितिनिबन्धनी भवति विषया रूपरसगन्धस्पर्शशब्दा विषय-तया विद्यन्ते यस्यास्सा-प्रकृष्टा वृत्तिः प्रवृत्तिस्साचात्कारो नतु यत्र विशेष इत्यर्थः तथाहि-तालुनि धारयतोऽस्य योदिव्यरूप-साचात्कारस्सरूपप्रवृत्तिः । रसनाग्रे धारयतोऽस्य योदिव्यरस-साचात्कारस्सरसप्रवृत्तिः । नासिकाग्रे धारयतोऽस्य योदिव्यगन्ध साचात्कारस्सगन्धप्रवृत्तिः । रसनामध्ये धारयतोऽस्य यो दिव्य-स्पर्शसाचात्कारस्स स्पर्शप्रवृत्तिः ।

रसनामूले धारयतोऽस्य योदिव्यशब्दसाचात्कारस्स शब्दप्रवृत्तिः । एतेन मणिचन्द्रादिविषयाः प्रवृत्तयोपुग्रपलचिता बोध्याः । नन्वेतासां प्रवृत्तीनां रूपादिविषयविषयकत्वेन कथं मनस्स्थितिनिबन्धनीत्वं रूपादिविषयकप्रवृत्तीनां मनःप्रवर्त्तकत्व-दर्शनादिति चेन्न । अदिव्यरूपादिविषयावगाहिनीनांवृत्तीनां प्रव-र्त्तकत्वेऽपि धारणादिजनितदिव्यरूपादिविषयकप्रवृत्तीनां प्रवर्त्त-कत्वानभ्युपगमात् प्रत्युतैतासां स्थालीपुलाकन्यायेन शास्त्राचा-र्य्योपदिष्टेष्वपवर्गादिषु सुसूक्ष्मपदार्थेषु प्रत्यायकत्वेन संशय विधम-नद्वारा समाधिप्रज्ञायां द्वारीभूतत्वात्—। भवेत्तदेतासां प्रवृत्तीनां प्रवर्त्तकत्वंचेन्नस्युरिमास्समाधिप्रज्ञायां द्वारीभूता इति नैतासां प्रवर्त्तकत्वम् ॥ २४ ॥ हृदय पुण्डरीके धारयतोऽस्य योगिनोभा-स्वर [illegible]

भास्वरबुद्धिसत्त्वविषयत्वात् सैव ज्योतिष्मत्युच्यते सापि मनसः स्थितिनिबन्धनीत्याह—। "ज्योतिष्मतीति"।

ज्योतिष्मती विशोका वा चित्तं वा वीतरागगम्।
स्वप्ननिद्रावलम्बं वा ध्यायेद्वा तत्समीप्सितम् ॥२५

चित्तस्थितेरुपायान्तरमाह—। "चित्तमित्यादिना—वीतो निवृत्तोरागस्सक्तिर्येषां ते वीतरागा वामदेवशुकादयस्तद्गं तद्विषयं कथन्तेमुक्ताः केनोपायेन मुक्तास्तद्भ्यसयाप्यभ्यस्तव्यमित्येवंरूपं परित्यक्ता विषयाभिलाषं वा चित्तं स्थितिनिबन्धनं भवति॥ वाह्यसकलवृत्तिपरित्यागेन चेतसोऽभ्यन्तरवाहिता स्वप्नः। निद्रा प्रसिद्धा, तदवलम्बनं वा चित्तंस्थितिनिबन्धनं भवति। यथाऽभिमते वाह्ये चन्द्रादावाभ्यन्तरे वा नाड़ीचक्रादौ ध्यायमाने चेतः स्थितिपदं लभते। ननु "विक्षेपप्रतिषेधार्थमेकतत्त्वावलम्बनमि" त्यनेन प्रागपि यथाभिमतैकतत्त्वावलम्बनस्योक्तत्वेनात्रापि पुनस्तत्कीर्त्तनात्पौनरुक्त्यमितिचेन्न पूर्वमेकतत्त्वावलम्बनस्य विक्षेपप्रतिक्षेपार्थकतयोक्तत्वेनेह चित्तस्थैर्य्यहेतुत्वाभिधानान्न पौनरुक्त्यम्—यद्वा तत्र विक्षेपप्रतिक्षेपार्थमेकस्मिन्नीश्वरतत्त्वे—एव भावनाऽत्र तु यस्मिन् कस्मिंश्चवाह्येऽभ्यन्तरे वेति पूर्वोक्तवैलक्षण्यं विविधविषयवासना विचित्रितचेतसा प्रथमत ईश्वरविषयप्रणिधानासम्भवेन यथाभिमते वस्तुनि स्थैर्य्याभ्यास उक्तः-अभ्यस्तस्थैर्य्येण तु चेतसा सुकरमीश्वरप्रणिधानंततश्च सुकरस्समाधिलाभोऽप्यसद्विषयानुध्यानस्य समाधिलाभानुपायत्वादितिभावः॥ २५॥

भावनफलं दर्शयति—। "परमाण्विति"—।

परमाणुमहत्त्वान्तोवशीकारोऽस्य जायते।

चित्तस्थैर्य्यम्भावयतोऽस्य योगिनस्सूक्ष्मभावनद्वारेण परमाणुपर्य्यन्तो वशीकारः,स्थूलभावनद्वारेणच परममहत्त्वान्तो वशीकारो

जायते सोयं वशीकारः परापरभेदेन द्विविधः स्थूलसूक्ष्मोभयभावनद्वारेण, परमाणुपर्य्यन्ते सूक्ष्मे—आकाशादिपर्य्यन्ते स्थूले च चेतसोऽप्रतिघातस्सपरो वशीकारः। एकस्यां स्थूलकोटौ सूक्ष्मकोटौ वा चेतसोऽप्रतिघातस्सोऽपरोवशीकारः। यद्वा स्थूलभावनद्वरेण यश्चेतस आकाशादिस्थूलेऽप्रतिघातस्सोऽपरोवशीकारः। सूक्ष्मभावनद्वारेण परमाणुपर्य्यन्ते सूक्ष्मे योऽप्रतिघातश्चेतसस्स परो वशीकारः। तद्वशीकारादभ्यस्तं योगिनश्चित्तं न पुनरभ्यासमपेक्षते येन योग्यभ्यासार्थं पुनरभ्यासोपाये प्रयतेतेत्युक्तावशीकारः। नन्वेवं स्थितं चित्तं किमाकारम्भवतीत्यतआह—। "अभिजात" इति।

अभिजातो मणिर्यद्वच्चित्तं तद्वदिहेष्यते ॥२६॥
क्षीणवृत्ति ग्रहीत्रादि रूपभेदेन भासते ।

क्षीणाः—प्रत्यस्तमिता नष्टा वृत्तयो प्रत्यया ज्ञानानि यस्य चेतसस्तत्। अयं भावः। यथा स्वच्छः स्फटिकोमणिर्नील पीतरक्त कुसुमोपाधिवशान्नोलाद्याकारेण भासते एवं क्षीणवृत्ति चित्तमपि ग्रहीतरि पुरुषे ग्रहणे-इन्द्रियादौ—ग्राह्येषु भूतेषु समापन्नंसत् तत्तदाकारेण भासते तद्यथा ग्राह्यसमापन्नंसद् ग्राह्याकारेण भासते ग्रहणसमापन्नंसद् ग्रहणाकारम्भवति। ग्रहीतरिसमापन्नञ्च ग्रहीत्राकारम्भवतीति॥ पूर्वं सबीजसमाधेर्वितर्कविचारानन्दास्मितानुगतभेदेन चातुर्विध्यं प्रदर्शितं सम्प्रति तस्यास्सवितर्क निर्वितर्क सविचार निर्विचारभेदांश्चतुरोदर्शयति। सङ्कीर्णेति—

संकीर्णा यैव शब्दार्थज्ञानविकल्पकैस्त्विह ॥२७॥
सवितर्का समापत्तिरर्थमात्रावभासिका ।
परा स्वरूपशून्येव स्मरणपरिशोधने ॥२८॥

विभक्तानां गवादि शब्दार्थज्ञानानां योऽविभागप्रत्ययःस विकल्पः। विकल्प एव विकल्पक इति स्वार्थे कन् प्रत्ययः। ज्ञानं बुद्धिवृत्तिः। अर्थो जात्यादिः। शब्दस्तदवाचकंपदम्। तथाचायमर्थः शब्दार्थज्ञानानां ये विकल्पकाः शब्देऽर्थविकल्पकः। अर्थेच शब्दविकल्पः। शब्देच ज्ञानविकल्पकः। ज्ञाने च शब्दविकल्पकः। अर्थे ज्ञानविल्पपकः। ज्ञाने चार्थ विकल्पकः। एभिर्विल्पकैस्सह सङ्कीर्णा सम्भिन्ना मिलिता या समापत्तिस् समाधिःसा सवितर्केत्यर्थः॥२५॥२६॥ गौरितिशब्दः। गौरित्यर्थः। गौरितिज्ञानम्—इतिविभक्त गोपदत्व गोपदवाच्यत्व धर्माणां गोशब्द गवार्थ गोज्ञानानां योऽयं गौरित्येकाकारेण सङ्कीर्णग्रहोयस्यां समापत्तौ विद्यते सा सवितर्का समापत्तिरितिभावः। स्मरणस्य—शब्दार्थ ज्ञानाविभागप्रत्ययस्य—परिशोधने—निवृत्तौ—स्वरूपशून्या-इव स्वे—शब्दज्ञाने—तयो रूपे—वाचकत्व सविषयकत्व धर्म्मौ ताभ्यां शून्या रहिता इव। अर्थमात्रस्य—ग्राह्यपदार्थमात्रस्य—अवभासिका प्रकाशिका या समापत्तिः सा परा निर्वतर्केत्यर्थः। यस्यां समापत्तौ शब्दार्थज्ञानानां विकल्प प्रत्ययो न भवति किन्तु शब्दः शब्दत्वेन रूपेण अर्थोऽर्थत्वेन रूपेण ज्ञानं ज्ञानत्वेन रूपेण भासते सा निर्वतर्का समापत्तिरितिभावः। यद्यपि निर्वितर्कसमाधौ शब्दार्थज्ञानानां सर्वेषां स्वधर्म्म पुरस्कारेण भानं तथापि समाधीनासर्थेष्वेव प्रकृतत्वेनार्थमात्रावभासिकेत्यत्र मात्रपदोपादानम्॥२७॥ एतत्तुल्यन्यायेन सविचार विर्विचारे निर्दिशति। "सविचारेति"।—

**सविचारा सुसूक्ष्मार्था निर्विचारा तथैव च।**
**व्याख्याताऽलिङ्ग पर्य्यन्ता सूक्ष्मविषयता मता २८**

तथाचेत्थमक्षरयोजना तया सवितर्कया निर्वितर्कया, च सविचारा निर्विचारा च सुसूक्ष्मविषया समापत्तिर्व्याख्याता सुसूक्ष्मा अर्था विषया यस्यास्सा। पूर्वोक्तायास्सवितर्काया निर्वितर्कायाश्च स्थूलविषयतापि दर्शिता भवति विशिष्यात्र सुसूक्ष्मार्थतुग्रपादानात्—तथा चात्राप्येवं विभागः। यस्यां समापत्तौ सूक्ष्मा विषयाः शब्दज्ञानविकल्पानुविद्धाः सन्ति सा सविचारा यस्यां चैते न विकल्पानुविद्धाः सा निर्विचारा॥ के सुसूक्ष्मा अर्था ये सविचार निर्विचारयोर्विषया इत्याह-। "अलिङ्गेति"—। न क्वचिल्लीयते न किञ्चिल्लिङ्गति गमयतिवेत्य-लिङ्गं प्रधानम्।—नन्वस्तिप्रधानसप्यात्मनोलिङ्गमिति न किञ्चिल्लिङ्गति गमयतीति व्युत्पत्त्या कथमलिङ्गं प्रधानमितिचेन्न—अत्रालिङ्गप्रतियोगिनि लिङ्गपदार्थेऽन्वयिकारणानुमापकत्वस्य विवक्षितत्वात्तथाच प्रधानं नान्वयिकारणानुमापकमकारणक-त्वात् पुरुषस्तु न तदन्वयिकारणमितितदनुमापकत्वेऽपि प्रधा-नस्य नालिङ्गत्वक्षतिरिति। तत्पर्य्यन्ता सूक्ष्मविषयताऽभिम-तेत्यार्थः। तन्मात्राहङ्कारमहत्प्रकृतयः सूक्ष्माविषया इति भावः। तेष्वपि च गन्धतन्मात्रादुरसतन्मात्रं सूक्ष्मोविषयस्तस्माच्च रूपतन्मात्रं तस्माच्च स्पर्शतन्मात्रं तस्माच्च शब्दतन्मात्रंतेभ्यश्चाह-ङ्कारस्तस्माच्च महान् महतः प्रकृतिरित्युत्तरोत्तरक्रमेण सूक्ष्म विषयता न चास्ति प्रधानादुत्तरः पुरुषस्तस्यापि सूक्ष्मत्वेन" "अलिङ्गपर्य्यन्ता सूक्ष्मविषयतेत्यभिधानमयुक्तमिति वाच्यम्—तत्त्वान्तरोपादानस्यैवात्र सूक्ष्मविषयत्वेनाभिमतत्वात्—नहि वयमुत्तरत्वमात्रेणैव सूक्ष्मविषयतां ब्रूमो येन पुरुषस्यापि प्रकृतेरुत्तरत्वमात्रेण सूक्ष्मविषयताऽऽपद्येत किन्तु तत्त्वान्तरो-पादानत्वेन पुरुषस्य च तत्त्वान्तरोपादानत्वाभावान्न सूक्ष्मत्वं तस्मादातन्मात्रेभ्यः प्रधानपर्य्यन्तैव सूक्ष्मविषयता स्थिता तेषा-

मेव तत्त्वान्तरोपादनत्वात्—तद्यथा—तन्मात्राणि भूतानामाका-शादीनामुपादानानि तेषाञ्चाहङ्कारस्तस्य च महान्—तस्य च प्रधानमिति—एतेन भूतेन्द्रियादीनां सूक्ष्मविषयता पराकृता द्रष्टव्या तेषां तत्त्वान्तरानुपादानात्। उक्ता समापत्तीनां प्रकृते प्रयोजनमाह-। "ता एवेति"—।

**ता एवाहुस्सबीजं च समाधिं योगवित्तमाः।**

ताः पूर्वोक्तास्चतस्स्सवितर्क निर्वितर्क सविचार निर्वचार समापत्तीः। बीजेन क्लेशेन सह बीजेनावलम्बेन वा सह वर्त्तते सबीजस्सम्प्रज्ञातसमाधिस्तमित्यर्थः। पूर्वोक्तास्सवितर्कादि समापत्तयस्सम्प्रज्ञातसमाधिरेवेत्यभिप्रायः।

तिसृणां सवितर्कनिर्वितर्कसविचाराणां निर्विचार फलक-त्वान्निर्वाचारायाः फलमाह—। "निर्विचारेति"।

**निर्विचार समापत्तेर्वैशद्यं जायते यदा ॥३०॥**

**तदाऽध्यात्मप्रसादस्स्यात् प्रज्ञा तत्र ऋतम्भरा।**

यदा निर्वचारायास्समापत्तेः प्रकृष्टाभ्यासवशाद्वैशद्यं नैर्मल्यं जायते तदाऽस्य योगिनोऽध्यात्मप्रसादो भवतीत्यर्थः। वैशद्यञ्च रजस्तमोभ्यामनभिभूतबुद्धिसत्त्वस्य स्थितौ दार्ढ्यम्—समुत्पन्ने-ऽध्यात्मप्रसादे चित्तवैशद्यफलं दर्शयति—"प्रज्ञेति"—। प्रज्ञा यथाभूतवस्त्ववगाही स्फुटालोकः। ऋतं सत्यं विभर्त्ति कदा-चिदपि न विपर्य्ययादिभिराच्छाद्यते या सा ऋतम्भरा—तस्मा-दृतम्भरात्मकस्फुटालोकात्सर्वं यथावत्पश्यन् योगी प्रकृष्टं योगमाप्नोति। ऋतम्भरप्रज्ञायां श्रुतानुमानाभ्यां वैलक्षण्यं दर्श-दर्शयति—। "श्रुतेति"—

श्रुतानुमानबुद्धिभ्यामितरार्थावलम्बिनी ॥३१॥
विशेषार्थतया तज्जसंस्कारोऽन्यप्रबन्धकः ।
संस्कारस्यापि संरोधे निर्बीजश्शास्त्रसम्मतः ॥३२

इति श्रीकुलयशस्वि शास्त्रि निर्मिते योगमकरन्दे
समाध्याख्यः प्रथमः पादः ।

—:*:—

श्रुतं च—अनुमानं चेति श्रुतानुमाने ताभ्यां जनिते बुद्धी श्रुतानुमानबुद्धी ताभ्यामित्यर्थः। इयम्-ऋतम्भरा प्रज्ञा इतरार्थस्य विशेषस्यापि अवलम्बिनी विषयिणी यतस्ते बुद्धी सामान्य मात्रविषये—इयं च निर्विचार वैशद्यसमुपेता ताभ्यां विलक्षणा विशेषविषयत्वात्—अनया हि सूक्ष्मा व्यवहिता विप्रकृष्टाश्च विषया:स्फुटमवभासन्ते इतरार्थावलम्बिनीत्यनेन श्रुतानुमानप्रज्ञाभ्यामस्या विशेषदर्शनेपि वक्ष्माण कारिकास्थ विशेषार्थतयेति पदेन प्रत्यक्षादपि ऋतम्भरप्रज्ञाया विशेषो दर्शितः। यतः प्रत्यक्षमपि सूक्ष्म व्यवहित विप्रकृष्ट वस्तूनि नावगाहते इयंच तदवगाहिनीति प्रत्यक्षादपि विलक्षणा। ऋतम्भरप्रज्ञायाः फलमाह—। तज्ज इति—। तस्या ऋतम्भरप्रज्ञाया जनितः संस्कारः। अन्यान् व्युत्थानसंस्कारान् प्रतिबध्नातीत्यर्थः विशेषार्थतयेत्यस्यार्थस्य पूर्वमुक्तत्वेऽपि—अत्रापि तदन्वयेनैवमर्थोऽवगन्तव्यः। ऋतम्भरप्रज्ञाया अन्यप्रज्ञाभ्यो विशेषविषयत्वेन तज्जनित एव संस्कारो व्युत्थानसंस्कारप्रतिबन्धको नत्वन्यप्रज्ञाजनितस्तथाच ऋतम्भरप्रज्ञाजनितसंस्कारेण

सति व्युत्थानसंस्कारप्रतिबन्धे न पुनर्व्युत्थानप्रज्ञासंस्काराणामुत्पत्तिः। इदानीं मुख्यसम्प्रज्ञातसमाधिमाह-। "संस्कारस्येति"। ननु ऋतम्भरप्रज्ञाजनितसंस्कारस्य व्युत्थानसंस्कार निरोधकत्वेऽपि सम्प्रज्ञातसंस्काराणामनिरुद्धत्वात्कथं निर्बीजस्समाधिरिति चेन्न। असम्प्रज्ञातापेक्षया सम्प्रज्ञातस्यापि व्युत्थान रूपत्वेन तत्संस्काराणामपि तेनैव निरोधसम्भवात्। अथ ऋतम्भरप्रज्ञाजनितसंस्कारस्य केन निरोध इतिचेन्न। असम्प्रज्ञातोत्पत्त्यैव तन्नाशसम्भवात्। चरम शब्दवत् स्वोत्तरवृत्तित्वविशिष्टस्यस्वस्यैव वा स्वनाशकत्वादितिसर्व्वसंस्कारनिरोधे भवति निर्बीजस्समाधिर्यत्र पुरुषः शुद्धस्सन्स्वरूपेऽवतिष्ठते न च पूर्व्वमसम्प्रज्ञातसमाधेः संस्कारशेषत्वाभिधानादत्र तु तस्यैव सकलसंस्कारनिरोधानन्तर्य्यकथनात्पौर्वापर्य्यासङ्गतिरिति वाच्यम्। अवस्थाभेदेनैवेदमभिधानमित्युक्तोत्तरत्वात्—अयमाशयः प्रथमाऽवस्थायां संस्काराणां शेषेऽपि चरमावस्थायां सकलसंस्काराणांनिरोधादिति न पूर्वापर विरोधः ॥ ३० ॥ ३१ ॥ ३२ ॥

इति श्रीकुशशक्ति शास्त्रि प्रणीतायां योगमञ्जर्य्यां

समाध्याख्यः प्रथमः पादः।

——:०:——

समाहितचित्तस्य योगमभिधाय व्युत्थितचित्तस्य योगः कथं सिद्ध्यतीतितत्साधनप्रतिपादनाय क्रियायोगमाह—। "प्रणिधानेति"।

**प्रणिधान तपोऽध्यायाः क्रियायोगः स सेवितः।**
**क्लेशेषु कुरुते सौक्ष्म्यं समाधिम्भावयत्यपि ॥१॥**

सर्वासां क्रियाणां परमगुरावीश्वरे समर्पणं तत्फलत्यागो वा प्रणिधानं येन सन्तुष्टः सततमीश्वरो निःश्रेयसप्रदाता स्यात्-स एव परमगुरुर्निखिलान्तःकरणमलनिवर्हणेनानुध्यायिनमनुगृह्य प्रत्यक् चेतनाधिगमद्वाराऽपवर्गंसम्प्रसाधयति। अथेश्वरस्य कथं निश्रेयसप्रदत्वमभिधीयते प्रत्यक्षासिद्धवस्तुनोऽनङ्गीकारेणेश्वराङ्गीकारस्य सुतरां दूरनिहितत्वान्नहि प्रत्यक्षासिद्धं वस्तु स्वीकर्त्तुं मुचितं शशविषाणादीनामपि स्वीकार्य्यतापत्तेस्तेषामपि प्रत्यक्षासिद्धत्वान्नच वाच्यमनुमानादिनेश्वरसिद्धिसम्भवः शशविषाणादेश्चानुमापकहेतोरभावान्न सिद्धिरिति, प्रत्यक्षैकप्रमाणवादितयाऽस्माभिरनुमानादेः प्रामाण्यानङ्गीकारात्—नच वाच्यमस्त्वनुमानादेः प्रामाण्यं कथमन्यथा धूमदर्शनानन्तरं वन्ह्यर्थिनां, पुन्नागनागवकुलपरिजातमन्दारमल्लिकाचम्पक सुरभ्यामोदवासिते नारिकेल ताल तमाल बिल्व चिरविल्व तिन्दुकामलक प्राचीनामलक कपित्थ जम्बुशताकीर्णे विपिने वहूनि मधुराणि फलानि सन्तीति वचनश्रवणसमनन्तरं फलार्थिनां च प्रवृत्तिरुत्पद्यत इति। वक्ष्यमाणदूषणगणग्राहग्रासात्तथाहि व्याप्तिपक्षधर्मताशालिलिङ्गमेव गमकं वाच्यं व्याप्तिश्च नाज्ञाता सती चक्षुरादिवज्जनिकेतिज्ञातैवाभ्युपगन्तव्या तथाच कः खलु तज्ज्ञानोपायः प्रत्यक्षमाहोस्विदनुमानं शब्दो वा-न तावत्प्रत्यक्षं तस्य स्वसम्बद्ध विषयज्ञानजनकत्वेनातीतानागतयोर्व्याप्तिग्रह‌ासम्भवात्—नाप्य-

नुमानं तस्य व्याप्तिज्ञानरूपत्वे स्वापेक्षणादात्माश्रयस्तयोर्भेदाङ्गीकारेऽन्योन्यापेक्षणे परस्पराश्रयस्तस्याप्यन्यापेक्षणे चानवस्थादयः—व्याप्तिपक्षधर्मताशालिलिङ्गरूपत्वेऽप्यनुमानस्यैते दोषा अनिर्वाधा इति नानुमानं व्याप्तिज्ञानोपायः। नापि शब्दः—धूमधूमध्वजयोर्व्याप्तिरिति वचनात्प्राक् शब्दरचनान्यथानुपपत्त्या व्याप्तिपदार्थज्ञानस्यावश्यकत्वेन तस्य चानवस्थादिभयेन शब्दजन्यत्वास्वीकारादिति न व्याप्ति ज्ञाने शब्दोऽप्युपायः। किञ्चानुपदिष्टव्याप्तिकस्यार्थान्तरदर्शनेऽर्थान्तरानुमित्यभावात्स्वार्थानुमानकथापि त्वन्मते नात्मानं लभेतेति व्याप्तिज्ञानोपायाभावेन तच्छालिलिङ्गस्य गमकत्वासिद्धा नाप्यनुमानेनेश्वरसाधने मनोरथ द्रुमफल सम्भवः। नापि शब्दप्रमाणेनेश्वरसाधनसम्भवः क्लेशाद्यपरामृष्टः पुरुषविशेष ईश्वर इतिवाक्यप्रयोगस्यार्थज्ञानमन्तराऽनिष्पत्ते स्तदर्थस्य त्वदभिमत ईश्वरोनाद्यापि केनचित् प्रमाणेन सिद्धस्ततश्च तादृशवाक्यप्रयोगस्यैवासम्भवादिति न शब्दप्रमाणेनापीश्वरः शक्यते साधयितुम्। उपमानादिकन्तु दूरापास्तन्तेषां संज्ञासंज्ञि सम्बन्धादि बोधकत्वेन तत्सिद्धयनन्तरं प्रवृत्तेः संज्ञिनश्चेश्वरस्यासिद्धा तत्सम्बन्धादेरप्यसम्भवे कथमुपमानादिकं संज्ञासंज्ञिसम्बन्धादिबोधकं तत्र प्रमाणं भवेत्—किञ्चोपमानादेर्भवता त्रिष्वेव प्रमाणेष्वन्तर्भावस्वीकारात्प्रमाणत्रयेणेश्वरसिद्धिनिराकरणादेवोपमानादेरपि तन्निराकारणसम्भवेऽपार्थं उपमानादेरीश्वरसिद्धिनिराकरणसन्वाह इति नेश्वरः कश्चित्पदार्थोऽयः सन्तुष्टो निश्रेयसंविदध्याद्यं कश्चिद्वा प्रणिदध्यात्ततश्च न युक्तन्निश्रेयसार्थिनामोश्वरेसर्वक्रियासमर्पणरूपं प्रणिधानमिति प्राप्ते।

उच्यते। कस्य हेतोरयमीश्वरो निषिध्यते। तत्र प्रमाणाभावात्। तस्य शशविषाणायमानत्वेनासत्त्वाङ्गीकाराद्वा न द्वितीयः। ईश्वरोऽसन्—इतिवाक्यप्रयोगस्यार्थावगममन्तराऽनिष्पत्तेः।

वाक्यप्रयोगात्प्रागीश्वरावगमे तु तदभ्युपगम आवश्यकः यदि चैव-मुच्यते तादृशवाक्यप्रयोगात्प्रागीश्वरो मया शशविषाणवदसन्नव-गतस्तथापीश्वरावगमस्त्वावश्यको भवतः सत्त्वेन वाऽसत्त्वेनाव-गच्छेद् भवान् अद्वैवैताश्चर्यं कारणम्—ईश्वरमसन्तम्मन्यमानेन कदाचिद्गुरुप्रसादात्सत्त्वमप्यवगमिष्यते-प्रसादय गुरूं त्वं शुश्रू-षया यथोपदिशेयुस्त्वाम्मतोश्वरसत्त्वप्रसाधनप्रक्रियां ब्रूहि चेश्वरो-ऽसन्निति वाक्यप्रयोगात्प्राक्केन प्रमाणेनेश्वरोऽसन्नवगतो भवता लोकोत्तरप्रज्ञेन प्रत्यक्षप्रमाणादनुमानाद्वा । अनुमानादिति चेत्तत्-स्वीकारे सिद्धान्तच्युतिरस्वीकारे चेश्वरासत्त्वावगमासिद्धिरिति नानुमानेन तदसत्त्वावगमोयुक्तः । प्रत्यक्षप्रमाणाच्चेद्गृहाद्बहिर्गतो भवान् गृहगतं बन्धुवर्गमपश्यन्—तदसत्त्वन्निश्चित्य कथन्न शोका-ग्निदाहदग्ध हृदयोमूर्छितो भूमौशयोतेति न प्रत्यक्षप्रमाणाभाव-मात्रादीश्वरासत्त्वावगमसिद्धिः । नच वाच्यं न मया प्रत्यक्षप्रमा-णाभावादीश्वरासत्त्वमभिधीयतेऽपितु प्रत्यक्षादेवेति, प्रत्यक्षस्यापि स्वसम्बद्धविषयावोधजनकत्वेन शशविषाणसमेनेश्वरेणासता चक्षु-रादीनां सम्प्रयोगानुपपत्तेर्नह्यसता शशविषाणेन चक्षुरादीनां सम्प्रयोगस्सम्भवति घटाभावादिनेवाऽसतापि विशेषणविशेष्यभाव-सन्निकर्षस्वीकारे तस्यापि सत्त्वम्प्रसज्येतेति वृद्धिमिच्छतस्तेमूल हानिर्ह्यकष्टतरम्—नहि घटाभावादयोऽ सन्तश्शशविषाणसमा-स्तेऽपि भावा एवेति न प्रत्यक्षादपीश्वरासत्त्वावगमनसम्भवः । किञ्च निषेधस्य प्रतियोगिज्ञानपूर्वकत्वेनेश्वररूप प्रतियोगिज्ञान-मन्तरा न तन्निषेधसम्भव इतीश्वरं निषेधतस्तवापीश्वराभ्युपगम आवश्यकोऽतो न कथञ्चिदपीश्वरापलापसम्भवः । नच निषेधस्य प्रतियोगिज्ञानमन्तराऽ सिद्धिनियमाभ्युपगमबलान्मया विकल्प प्रत्ययेनेवेश्वररूपोऽसन् प्रतियोगी गृहीत इत्यसत एवेश्वरस्य निषेधस्वीकारे न प्रतियोगिज्ञानविधयेश्वरसाधनावकाश इति

—असतो निषेधानुपपत्तेर्नह्यसन्निधातुं प्रतिषेद्धुं वा शक्यते येनालीकतामभ्युपगम्येश्वरस्य तन्निषेधोऽनुष्ठीयेतेति नेश्वर सत्त्वावगममन्तरा तन्निषेधः। नच वाच्यमसतोऽपि गगनारविन्दस्यास्ति दृष्टिगोचरः प्रतिषेधो गगनारविन्दं नास्तीति प्रतीति सम्भवात्तत्रापि सत एव प्रतिषेधात्—नहि गगनारविन्दं नास्तीतिप्रतीतिगोचरोऽसतो गगनारविन्दस्याभावः, किन्तु—अरविन्दे गगनजन्यत्वाभाव इति नासतोनिषेधसम्भवस्तथा चेश्वरोनास्तीति निषेधो न सम्भवति—ईश्वरस्य त्वया विकल्प प्रत्ययविषत्वेनासत्त्वाभ्युपगमात्। यदि चारविन्दे गगनजन्यत्वाभाव इव। ईश्वरेऽपवर्गदातृत्वाभाव ईश्वरो नास्तीतिप्रतीतिगोचर इत्येवमुच्येत तदाप्यरविन्दवदीशसत्वावगम आवश्यकः। किञ्च विकल्पस्य सति धर्म्मिण्यसद्रूपधर्म्मभेदावगाहितया निषेधप्रतियोगितया ज्ञायमानस्यासत ईश्वरस्य कथं विकल्प प्रत्ययः। किमीश्वरेऽविद्यमानस्यासत्त्वस्य भेदप्रत्ययः आहोस्विदसदभिन्नस्येश्वरस्य भेदप्रत्ययः। न तावत्प्रथमः। ईश्वरसत्त्वाङ्गीकारमन्तरा तत्रासत्त्वस्य विद्यमानतानुपपत्तेस्तदङ्गीकारे चेश्वरासत्त्वासिद्धिः। नापि द्वितीयः। तदङ्गीकारमन्तराऽसदभिन्नेश्वरभेदप्रत्ययस्याप्यसम्भवात्। एतेन प्रथमविकल्पोऽपि निरस्तो बोधव्यः। तथाच सिद्ध एवेश्वरः परमगुरुर्यस्मिन् सर्वक्रियासमर्पणात्मकं प्रणिधानमुच्यते व्याप्तिग्रहणोपायस्त्व न विस्तरभयादिह प्रपञ्चित इति कृतं पल्लवैः प्रकृतमेवानुसरामः। तपः कृच्छ्रचान्द्रायणादि—अध्यायः प्रणवपूर्वक पवित्र मन्त्राणां जपः। एते क्रियायोगपदव्यपदेश्याः। ईश्वरे सर्वं कर्मसमर्पणमन्तरेण व्युत्थितचित्तस्य योगसिद्धिमत्याशाऽसम्भव इति प्रणिधानोपादनम्। व्युत्थितचित्तस्य शरीर बलान्वितस्य वहिश्चेष्टस्य शरोरकार्श्यमन्तरेण प्रायश एकत्राव स्थानासम्भव इति तपोग्रहणम्। प्रणवादिपवित्रमन्त्रजपम-

न्तरावुत्थितचित्तस्यासदालापेभ्योऽनिवृत्तिरित्यध्यायोपादानम्।
ननु क्रियायोगपदव्यपदिष्टानान्तपोऽध्यायेश्वरप्रणिधानामेकैकस्यापि स्यात् क्लेशतनूकरणार्थत्वं समाधिभावनार्थत्वं चेत्यत आह—। स इति। एकवचनान्ततच्छब्दपरामृष्टस्य क्रियायोगस्यैव क्लेशतनूकरणार्थत्वं समाधिभावनार्थत्वं च नत्वेकैकस्य प्रणिधानदेः। नहि जातमात्रः सन् क्रियायोगोऽनेकजन्मार्जितवासनाविषयाप्यायितस्फीतेषु क्लेशेषु सौख्यमाधातुमीष्ट इति सेवित इत्यनेन दीर्घकालादरनैरन्तर्य्यसत्काराऽऽसेवितत्वं प्रदर्शितं क्रियायोगस्य॥ १॥ अथ के क्लेशा इतितत्स्वरूपाकांक्षायामविद्याऽस्मितारागद्वेषाभिनिवेशान् पञ्चक्लेशान् सञ्ज्ञान्तरद्वारा क्रमेण निर्दिशति—"तम"इति।

तमो मोहो महामोहस्तामिस्रोह्यन्धसञ्ज्ञकः।
एते क्लेशास्तमः क्षेत्रमुत्तरेषां प्रकीर्त्तितम्॥२॥

सत्यां चाविद्यायामेषां सत्त्वात् क्षीयमाणायांचानुचयादित्यस्मितादिचतुर्णामविद्यामूलकतामाह—"तमः क्षेत्रमिति"। तमोऽविद्याऽनात्मन्यात्माभिमानरूपा क्षेत्रं प्रसवभूमिः। उत्तरेषामस्मितादीनांचतुर्णाम्। प्रकीर्त्तितमुदाहृतमित्यर्थः॥२॥ क्लेशानां चातुर्विध्यन्दर्शयति—। एते—इति।

एते चतुर्विधा ज्ञेयाः प्रसुप्तादिप्रभेदतः।
तमोऽनित्येषु नित्यत्वप्रत्ययः परिभाष्यते॥३॥

आदिना तनुविच्छिन्नोदाराणां परिग्रहस्तत्र ये क्लेशाश्चित्तभूमौ स्थिताः प्रबोधाभावेन नारम्भन्तेस्वकार्य्याणि ते प्रसुप्ताः। स्वप्रतिपक्षभावनया शिथिलीकृतकार्यसम्पादनशक्तयस्तनवः। अन्योन्यमितरोत्कर्षे वलवता क्लेशेनाभिभूतशक्तयोविच्छिन्नाः।

यथा रागकाले द्वेषः। द्वेषकाले च रागः। अभिनिवेशकाले रागद्वेषावित्यादयः। ये स्वं स्वं कार्य्यमभिनिर्वर्त्तयन्ति ते उदाराः। अविद्यास्वरूपमाह—। "तम" इति। अतस्मिंस्तदितिभासस्तमः। अनित्येषु कार्य्येषु पृथिव्यादिषु योनित्यत्वप्रत्ययः। नित्यानि पृथिव्यादीनीत्याकारः स तम इत्युच्यते। एतेनाशुचिदुःखानात्मस्वशुचिसुखात्मत्वाभिमानोऽविद्येत्यप्युक्तं बोध्यम् ॥३॥ अस्मितादिरूपमाह—। मोह इति।

**मोह एकात्मता ज्ञक्त्योर्महामोहस्सुखे स्पृहा।**

**तामिस्रोदुःखहानीच्छेदन्धासीऽन्धसञ्ज्ञकः ॥४॥**

पुरुषोदृक्शक्तिः बुद्धिर्दर्शनशक्तिस्तयोर्भोक्तृभोग्यत्वेन भिन्नयोरपि य एकताभिमानस्समोहोऽस्मिता ननु तमोऽपरसञ्ज्ञाया अविद्यातोऽस्मिताख्यस्य मोहस्य न कोपि विशेष उभयोरभिमानात्मकत्वाऽविशेषादितिचेन्न। अविद्ययाऽनात्मानमात्मतयाभिमत्य पश्चाद्योबुद्धिपुरुषयोरेकताभिमानः सोऽस्मिताख्यो मोहो येन कर्त्ताहमस्मीत्यभिमन्यते तथाचाविद्याऽस्मितयोरयमभेदः। यथा चन्द्रबिम्बविरहिणि वारिणि चन्द्रोवारिणीतिधीः प्रागुत्पद्यतेऽनन्तरं च तद्गते चन्द्रे कम्पादिकत्वावगाहिनी, तद्वदनात्मन्यात्मत्वाभिमानानन्तरं यया कर्त्तास्मीत्यभिमन्यते साऽस्मिता तस्याश्चाविद्याकार्य्यत्वेनाभिमानात्मकत्वेपि न क्षतिः कार्य्यकारणानुप्रवेशस्यावश्यकत्वात्—सुखाभिज्ञस्य सुखे सुखसाधने चेच्छा महामोहोरागः। दुःखाभिज्ञस्य दुःखे दुःखसाधने च जिघांसा तामिस्रोद्वेषः। पूर्वजन्ममरणानुभवजनितवासनाचक्रवेगादुत्पद्यते यस्सर्वेषां मरणत्रासो मम शरीरेन्द्रियादिभिर्वियोगो माभूदित्येवं लक्षणस्सोऽन्धसञ्ज्ञकोऽभिनिवेशः ॥४॥ उक्तपञ्चक्लेशानां द्वैविध्यं प्रहाणोपायद्वयं चाह—। "सूक्ष्मा" इति।

**सूक्ष्माः लयेन हेयास्ते ध्यानेन वृत्तयस्तथा ।**
**दृष्टादृष्ट जनिर्ज्ञेयः कर्माशयस्सकारणः ॥५॥**

सूक्ष्मा, वासनारूपेणावस्थिताः, ये क्लेशास्ते लयेन चित्त-प्रलयेन, हेयास्त्यक्तव्याः, चरिताधिकारे चेतसि लीने तेनैव सह लीयन्ते सूक्ष्माः क्लेशाः । स्थितानामारब्धकार्य्याणां क्लेशानां वृत्तयःसुखदुःखमोहात्मिकाः पूर्वोक्तेन क्रियायोगेन तनू कृत्य ध्यानेन चित्तैकाग्रलक्षणेन हेयाः । एतेन स्थूलसूक्ष्माणां क्लेशानां स्वल्पायासमहायासपरिहार्य्यत्वमपि बोध्यं यथा वस्त्राणां स्थूलोमलःस्वल्पेन प्रयासेन पूर्वं निर्धूयते तदन्तर्गतःसूक्ष्मश्च महता प्रयत्नेन तद्वत् क्लेशानां स्थूलाःसुखदुःखमोहात्मिका वृत्तयश्चित्त-लयापेक्षयाऽल्पप्रयासेन ध्यानेन परिहृता भवन्ति सूक्ष्माश्च क्लेशा-श्चित्तलयेन महाप्रयासेनेति । क्लेशानां स्वरूपादिकमभिधाय कर्म्माशयस्य तत्प्रदर्शयितुमाह । "दृष्टादृष्टेति" । सकारणः—अविद्यादिक्लेशमूलकः । कर्म्माशयोवासना-सूक्ष्मस्वरूपेणाव-स्थितं कर्म । दृष्टेऽस्मिन् जन्मनि । अदृष्टे जन्मान्तरे च ज्ञेयो वेदनोयस्तद्यथा नन्दीश्वर नहुषयोर्दृष्टजन्मवेदनीयः—यतस्ता-वस्मिन्नेव जन्मनि स्वकं परिणामं हित्वा देवत्वतिर्य्यक्त्वाभ्यां परि-णतौ । नारकिणाञ्चादृष्टजन्मवेदनीयः । एवञ्चान्येषां कर्म्माशयो यथायथं दृष्टादृष्टजन्मवेदनीयोऽवगन्तव्यस्तथाचायमत्र विवेकः कर्म्माशय इत्यनेन कर्म्मणां वासनात्मकं स्वरूपं दर्शितं सकारण इत्यनेन च सर्वेषां स्थूलसूक्ष्मरूपेणावस्थितानां कर्म्मणामविद्यादि क्लेशजन्यत्वं प्रदर्शितं दृष्टादृष्टेत्यनेन तु फलं दर्शितम् ॥५॥

सत्यविद्यादौ मूले कर्म्माशयोजात्यायुर्भोगान् जनयतीत्याह—"कर्म्माशये"ति ।

**कर्माशयसमूलस्य विपाको भवति त्रिधा ।**

**पुण्यापुण्यप्रसूतत्वात्सुखदुःखफलास्त्विमे ॥६॥**

विपाकः फलं त्रिधा—जात्यायुर्भोगैस्त्रिप्रकारैः । जातिर्जन्म-ब्राह्मणत्वादिर्वा । आयुः प्राणैः कायसम्बन्धः । भोगः सुख-दुःखान्यतरसाक्षात्कारः । सञ्चितकर्मवासनाः स्वकीयं जात्या-द्यात्मकं कार्य्यमारभन्त इति भावः । पुण्यकर्मवासनालब्ध-जन्मनां जात्यायुर्भोगानां सुखजनकत्वं पापकर्मवासनालब्ध जन्मनान्तु दुःखजनकत्वमित्याह "पुण्यापुण्ये"ति इमे जात्या-युर्भोगाः ॥ ६ ॥ अनैकान्तिकदुःखोच्छेदं समीहमानस्य ज्ञात-क्लेशादिविवेकस्य योगिनस्सकलमेव भोगसाधनं परिणाम तापसंस्कारैर्दुःखमादावन्ते मध्ये च विषयसुखानुभवकालेऽपि विषसंस्पृक्तान्नवत् प्रतिकूल वेदनीयमेवेत्याह—। परिणामेति ।

**परिणामताप संस्कार दुःखैर्गुणवृत्तिभिः ।**

**विरोधाद्वस्तुजातं च दुःखमेव विवेकिनः ॥७॥**

परिणामदुःखेन तापदुःखेन संस्कारदुःखेन च गुणानां सत्त्वरजस्तमसां वृत्तयः । सुखदुःखमोहात्मिका यास्ताभिः । पर-स्परं विरोधात्—अभिभाव्याभिभावकभावाद्वस्तुजालमेव सर्वमेव विवेकिनः ज्ञातक्लेशादितत्त्वस्य दुःखमित्यन्वयपूर्वकोऽर्थः । तत्र परिणामदुःखं भोगदशासमापन्नविषयसजातीयाभिलष्यमाणविष-यान्तराऽप्राप्तिनिबन्धनम् तापदुःखमुपभुज्यमानसुखसाधनप्रति-द्वन्द्विविषयविषयकद्वेषसमुत्थम्—। संस्कारदुःखं विषयसन्निधान-जनितसुखानुभवसमुत्पन्नानवस्थितसंस्कारवेदनीयम् । पुण्यकर्मवा-सनाजनितसुखानुभवावसरेपि पूर्वोक्तदुःखानां मूलतोऽनुच्छेदात्-सुखमपि दुःखसंस्पृष्टतया विषसंपृक्तान्नवद्दुःखमेवेतिभावः ॥७॥

यथा चिकित्साशास्त्रं चतुर्व्यूहं रोग आरोग्यं रोगहेतु भैषज्य मित्येवमिदमपि शास्त्रं चतुर्व्यूहमित्याह—। "हेये"ति।

हेयहानी तयोर्हेतू-इतिव्यूहा यथाक्रमम् ।
हेयमनागतं दुःखं संयोगोद्रष्टृदृश्ययोः ॥८॥
हेयहेतुस्तथाहानं दुःखत्रयनिवर्त्तनम् ।
हेतुरविप्लवा तस्य विवेकख्यातिरुच्यते ॥९॥

हेय हेयहेतु हान हानोपायांश्चतुरोव्यूहान् स्वरूपनिर्देशपूर्वकं क्रमेण दर्शयति—। "हेयमनागतमि"ति। भूतदुःखस्य व्यतिक्रान्तत्वेन क्लेशाजनकत्वमनुभूयमानस्य च हातुमशक्यत्वे नानागतस्यैव दुःखस्य हेयता पर्य्यवस्यति। द्रष्टा-चेतनः पुरुषः। दृश्यम्—परिणामि बुद्धितत्त्वम्—तयोर्यौविवेकाग्रहपूर्वकः संयोगोभोक्तृभोग्यत्वेन सन्निधानं स हेयस्य निरुक्तदुःखत्रयस्य हेतुः कारणम्। दुःखत्रयस्यात्यन्तिकी निवृत्तिर्हानम्। तस्य हानस्य हेतुः कारणमविप्लवा न विप्लवो विपर्य्यासो मिथ्याज्ञानं यस्यांसा विपर्य्ययशून्या विवेकख्यातिः पुरुषविशेष्यकःप्रकृत्यन्यत्व प्रकारकः साक्षात्कारः ॥८॥९॥ दृश्यस्य क्रिया स्वरूप प्रयोजनानि दर्शयति। "दृश्यमि"ति।

दृश्यं भोगापवर्गार्थं स्थितिकर्म्म प्रकाशवत् ।
भूतेन्द्रियात्मकं ज्ञेयमात्मा तस्य दृगर्थकः ॥१०॥

भोगःसुखदुःखान्यतरसाक्षात्कारः। अपवर्ग आत्यन्तिकी दुःखनिवृत्तिस्तावर्थः प्रयोजनं यस्य तत्। ननु भोगापवर्गौ यदि दृश्यस्य स्वीक्रियेते तदा कृतं तदतिरिक्तेन चेतनेन, चेतनोऽहङ्करोमीति कृतिसामानाधिकरण्यचैतन्यप्रत्ययेन तत्र चैतन्यस्यापि सम्भवात्। नचेद्दृश्यस्य तदा चेतनस्य भोगापवर्गभागित्वेनासङ्गत्व-

ष्वतिरितिचेन्न,दृश्यगतयोर्भोगापवर्गयोश्चेतने पुरुषे व्यपदेशसम्भवात्
—यथा राज्ञ्यविद्यमानावपि स्वस्वामिभावसम्बन्धमादाय योद्धृ-
गतौ जयपराजयौ व्यपदिश्येते तथा पुरुषेऽपि भोक्तृभोग्यत्वसम्बन्ध-
निबन्धनोव्यपदेशः। परिणामित्वेन बुद्धावचैतन्यानुमानस्याव-
श्यकत्वेन चेतनोऽहं करोमीति प्रतीतेश्चैतन्यांशे भ्रान्तित्वात्।
चेतनस्य च न स्वाभाविकौ भोगापवर्गौ स्वाभाविकत्वे च तयो
र्निवृत्त्यसम्भवात्, नहि स्वभावस्याभावः केनापि कर्त्तुं शक्यते
नह्युष्णस्वभावोवह्निर्वर्षसहस्रेणापि शीतयितुं शक्यस्तस्मान्न
भोगापवर्गस्वभावकः पुरुषस्तस्य भोगस्वभावत्वे संसारानुच्छेदः।
अपवर्गं स्वभावत्वे चानुभूयमानबन्धानुपपत्तिः। तथाच साङ्ख्यसू-
त्रम्। "स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यमि"ति,
दृश्यं भोगापवर्गार्थम्। स्थितिर्नियमनरूपा तद्वत्तमः। कर्म
प्रवृत्तिरूपं तद्वद्रजः। प्रकाशोज्ञानरूपस्तद्वत्सत्त्वम्। भूतानि पृथि-
व्यादीनि। इन्द्रियाणि श्रोत्रादीनि। आत्मा स्वरूपं यस्य तत् भूत-
भावेनेन्द्रियभावेन च परिणतमित्यर्थः। तस्योक्तलक्षणस्य दृश्य
स्यात्मा स्वरूपं दृगर्थकः पुरुष भोगापवर्गसम्पादकः॥१०॥ दृश्यं
निरूप्य द्रष्टारं निरूपयति। "द्रष्टे"ति।

द्रष्टा च दृशिमात्रस्स्याच्छुद्धोपि प्रत्ययानुगः।
दृश्यंश नाशमपि प्राप्तं कृतार्थं पुरुषम्प्रति॥११॥
तद्‌नाशान्यवृत्तित्वात् संयोगो दृष्टृदृश्ययोः।
रूपोपलब्धिहेतुःस्यादविद्या तस्य कारणम्॥१२॥

द्रष्टा पुरुषः। दृशिमात्रश्चेतनमात्रः। शुद्धोऽपि सुखाद्यसंसृष्टोऽपि
प्रत्ययानुगः प्रत्यया विषयोपरक्तानि ज्ञानानि तान्यनुगच्छत्यनुसर-
तीति। अव्यवहितसन्निधानमात्रेण बुद्धावुपरागे सति पुरुषस्य
द्रष्टृत्वं सम्भवतीतिभावः। ननु दृश्यस्य भोगार्थत्वे कृतभोगस्य

तस्य प्रयोजनाभावादेवोपरमे सर्वेषां पुरुषाणां शुद्ध रूपत्वेन वन्धराहित्यात् संसारमात्रोच्छेदस्स्यादित्यत आह—। "दृश्य-मिति"। विवेक ख्यातिपर्य्यन्तं भोगसम्पादनात् कृतार्थं विवेक-ख्यातिमन्तं कुशलं पुरुषं प्रति दृश्यं नाशम्प्राप्तमपि नष्टमपि तद्दृशमनाशि—अनष्टम्। तदन्येष्वकुशलेष्वनुत्पन्नविवेकख्याति मत्सु वृत्तित्वात्—विद्यमानत्वात्। दृश्यस्य सर्वपुरुषसाधारण तया कृतार्थम्प्रति नष्टत्वेप्यन्यान्प्रत्यनष्टव्यापारतयाऽवस्थाना-त्तदनाशि तथाच नैकमुक्त्या सर्वमुक्तिप्रसङ्गोऽपि। दृश्यद्रष्टारौ निरूप्य सम्प्रति तयोस्सम्बन्धं दर्शयति—। संयोग इति। द्रष्टृ-दृश्ययोर्भोक्तृभोग्यत्वात्मकस्वरूपसम्बन्धविशेषलक्षणोयः संयोगस्स तयोरूपोपलब्धौ स्वरूपसाक्षात्कारे हेतुः कारणं। व्यापकयोः प्रकृतिपुरुषयोस्संयोगसम्बन्धासम्भवात्। न च दैशिकात्यन्ता-भावाप्रतियोगित्वलक्षणं व्यापकत्वं प्रकृतौ, सर्वमूर्त्तसंयोगित्व रूपं च पुरुष इति प्रकृतिपुरुषयोः संयोगोऽपि सम्भवति-प्रकृतिस्सर्वत्र तादात्म्येन पुरुषवत्सर्वमूर्त्तसंयोगित्वाभावादिति वाच्यम्। अमूर्त्तद्वयसंयोगानङ्गीकारात् क्रियाशून्यत्वरूपामूर्त्त-त्वस्य प्रकृतिपुरुषयोरुभयत्र सम्भवान्नामूर्त्तयोः प्रकृतिपुरु-षयोःसंयोगोयुक्तः। यद्यपि परिणामलक्षणक्रियाशून्यत्वं प्रकृतौ नास्तीति तस्या अपिमूर्त्तत्वोपपत्तिस्तथाप्यत्र क्रियापदेन परिणा-मान्यक्रियाया विवक्षणान्न दोषः। वस्तुतस्तु न प्रकृतेःपुरुषेण साक्षात्सम्बन्धोरूपोपलब्धिहेतुरपितु बुद्धिद्वारकस्सच संयोगोऽपि सम्भवति घटाकाशस्येवात्मना व्यापकयोराकाशात्मनोर्मिथस्सं योगाभावेपि घटाकाशस्यात्मना संयोगो निर्बाधो घटाकाशस्या-व्यापकत्वाद्विभ्वोर्द्वयोस्संयोगानङ्गीकारादेवं प्रकृतेर्विभुत्वेऽपि बुद्धे-रविभुत्वेन तद्द्वारकस्संयोगोनानुपपन्नः। एतेन भोक्तृभोग्यत्व-लक्षणसम्बन्धस्वीकारे सुषुप्तौ पुरुषे भोक्तृत्वाभावेन रूपोपलब्धि-

हेतुसम्बन्ध भङ्गात् पुनरनुत्थानप्रसङ्ग इत्यपि निरस्तम् । तत्रापि संयोगसम्बन्धस्य सत्त्वात्—स्वस्वामिभावसम्बन्धात्मकसंयोगाङ्गीकाराद्वा ॥ ११ ॥ १२ ॥ संयोगकारणाविद्यानाशोपायमाह—। यदेति ।

**यदा संजायते ख्यातिर्नाशस्तस्या निरूपितः ।**
**सप्तधा प्रान्तभूमौ धीर्योगिनस्तस्य भाषिता ॥१३॥**

ख्यातिरित्यतः प्राग्विवेकेति पूरणीयम् । तथाच विवेकख्यात्याऽविद्यानाशस्ततो द्रष्टृदृश्यसंयोगनाशस्ततश्च दुःखत्रयहानरूपं पुरुषस्य कैवल्यम् । उत्पन्नविवेकज्ञानस्य योगिनस्सालम्बनसमाधिभूमिपर्य्यन्ता ज्ञातव्य विवेकरूपा सप्तप्रकारा प्रज्ञा भवतीत्याह—। "सप्तधेति" । तस्य-उत्पन्न विवेकख्यातेः । प्रान्ता सालम्बनसमाधिपर्य्यन्ता या भूमिः । अवस्था-तस्यां सप्तधा-सप्तभिः प्रकारैः । धीः प्रज्ञा भाषिता योगिभिर्निरुक्ता तथाहि ज्ञातं मया ज्ञेयं न ज्ञातव्यं किञ्चिदवशिष्यते१ । क्षीणामे क्लेशा न क्षेतव्यमवशिष्यते २ । ज्ञानमधिगतंमया ३ । लब्धा मया विवेकख्यातिः ४ । इयं चतुर्विधाकार्य्यमुक्तिः । चरितार्था मे प्रज्ञा १ । समाप्ताधिकारा गुणा गिरिशिखरच्युतग्रावाण इव न पुनरवस्थानं गमिष्यन्ति २ । एतस्यामवस्थायां गुणसम्बन्धातीतस्स्वात्ममात्रनिष्ठोऽहम् ३ । इयञ्च त्रिप्रकारा चित्तमुक्तिरिति दर्शिता सप्तप्रकारवती प्रज्ञा ॥ १३ ॥ वक्ष्यमाण योगाङ्गानुष्ठानाच्चित्तसत्त्वावरणरूपाशुद्धिक्षये योज्ञानप्रदीप्तिरूपोविवेकख्यातिपर्य्यन्तस्सात्विकः परिणामस्स विवेकख्यातेरुपाय इत्याह—। योगाङ्गानामिति—।

**योगाङ्गानामनुष्ठानाद्विलीने पञ्चपर्वणि ।**
**ज्ञानप्रदीप्तिराख्यातेस्तत्प्रचयानुवर्त्तिनी ॥१४॥**

पञ्चपर्वणि—चित्तसत्त्वावरणरूपाशुद्धिस्वरूपे विपर्य्यये । विलीने विनष्टे । ज्ञानप्रदीप्तिरुत्तरोत्तरं वर्द्धमानः सात्त्विकः परिणामः । आख्यातेः विवेकख्यातिपर्य्यन्तः । तत्प्रचयस्य पञ्चपर्व विनाशस्य अनुवर्त्तिनो अनुगामिनो यथा यथा योगाङ्गानामनुष्ठानं तथा तथाऽशुद्धेः प्रचयः । यथा यथा चाशुद्धेः प्रचयस्तथा तथा ज्ञानदीप्तिः क्रमेण वर्द्धते सति च विवेकसाक्षात्कारे निवृत्तकर्त्तृत्वाद्यभिमानः पुरुषःस्वरूपेऽवतिष्ठते । योगाङ्गानुष्ठानं चाशुद्धेर्वियोग कारणं ज्ञानदीप्तेस्त्वाप्तिकारणम् । ननु कतिचैतानि कारणानि येनैतदुच्यते इतिचेत्—उत्पत्ति स्थित्यभिव्यक्ति विकार प्रत्ययाप्ति वियोगान्यत्व धृतयो नव कारणानि तद्यथा मनाभवति ज्ञानस्योत्पत्तिकारणं यतोमनसः परिणामविशेषो ज्ञानं विषयान्तरमवगाहमानं तस्मिन्नेवोत्पद्यते—नैयायिकवदस्मिन्नये ज्ञानोत्पत्तेरात्मन्यस्वीकारात् । पुरुषार्थता च मनसःस्थितिकारणं यावत्पुरुषार्थं मनसोऽवस्थानात् कृतपुरुषार्थन्तु न पुनः कार्य्यमारभते इति पुरुषार्थता मनसःस्थिति कारणम् । इयमेव मनसः स्थितिः यत्कार्य्यारम्भणम् । अभिव्यक्ति कारणंयथा रूपस्यालोकः—यतःसत्यालोके रूपज्ञानं भवति । विकार कारणं मनसो विषयान्तरं यतो विषयाद्विषयान्तरं गच्छन्मनोनैकाग्रतां लभते । प्रत्ययकारणं धूमस्तज्ज्ञानं वा वह्निज्ञानस्य, यतोधूमात्तज्ज्ञानाद्वा वह्निं प्रतिपद्यते । आप्तिकारणं योगांगानुष्ठानं ज्ञानदीप्तेर्योगाङ्गानुष्ठानमन्तरेण ज्ञानदीप्तेरसम्भवात्—दण्डादिकमपि घटस्याप्तिकारणं तद्विनाऽपिघटोत्पत्तेरसम्भवा । वियोगकारणं योगाङ्गानुष्ठानमशुद्धेः । धूमस्य मशकादेः । अन्यत्वकारणं सुवर्णस्य सुवर्णकारः । धृतिकारणं शरीरमिन्द्रियाणां तानि च शरीरस्य जलादिकं च काष्ठनौकादेः वायुस्त्वाकाशस्थितद्रव्यादेः ॥ १४ ॥ कानि

योगाङ्गानि कति च येषामनुष्ठानादशुद्धिक्षयो भवतीत्यत आह—। "प्राणायमनमि"ति ।

प्राणायमनमाहारो यमोनियम आसनम् ।

समाधिर्धारणा ध्यानमष्टावङ्गान्यमूनि च ॥१५॥

आहार इत्यस्य प्रत्याहार इत्यर्थः। तेषु च धारणा ध्यान समाधयोन्तरङ्गाण्यङ्गानि प्राणायामादीनि तु हिंसादि वितर्कोन्मूलनद्वारा समाधे रेवाङ्गानीति तेषां वहिरङ्गत्वम् । तत्राप्येषामन्योन्यमुपकार्य्योपकारकभावेनान्तरङ्गत्ववहिरङ्गत्वे तद्यथा यमो नियमस्यान्तरङ्गं वहिरङ्गञ्चासनस्य । नियमोन्तरङ्गमासनस्य वहिरङ्गं च प्राणायामस्य । आसनमन्तरङ्गं प्राणायामस्य वहिरङ्गंच प्रत्याहारस्य। प्राणायामोऽन्तरङ्गं प्रत्याहारस्य वहिरङ्गंच धारणायाः । धारणा चान्तरङ्गंध्यानस्य वहिरङ्गं च समाधेः। ध्यानमन्तरङ्गं समाधिवहिरंगं च योगस्य। समाधिर्योगस्यान्तरंगमितिपूर्वोक्तक्रमेणान्तरंगवहिरंगभावः । एतेन धारणाध्यानयोरपि वहिरङ्गत्वं दर्शितं तयोरन्तरङ्गत्ववादश्च यमाद्यपेक्षया निर्वहणीयः। व्युत्थितचित्तस्य योगिनो नह्यहिंसादियमानुष्ठानमन्तरा नियमस्सिद्ध्यति नापि नियमं विनाऽऽसनं नाप्यासनं विना प्राणायामो नापि प्राणायाममन्तरेण धारणा न धारणां विना ध्यानं न ध्यानं विना समाधिर्न समधिमन्तरा योगस्सिद्ध्यतीत्यष्टाङ्गोपादानम् ॥ १५ ॥ तत्र यमान्दर्शयति—। अहिंसेति ।

अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यापरिग्रहौ ।

यमा जात्याद्यवच्छिन्नास्सार्वभौमा महाव्रतम् ॥ १६

अहिंसा सर्वभूतानामनभिद्रोहः। सत्यं वाङ्मनसयोर्यथार्थवत्त्वम्। अस्तेयं परस्वानपहरणम्। ब्रह्मचर्य्यमुपस्थसंयमः।

अपरिग्रहो भोगसाधनानामस्वीकारः । एते पञ्च यमाः । तएव जात्यादिभिश्चतुर्भिरवच्छिन्नास्सार्वभौमास्सर्वासु चित्तभूमिषु भवा महाव्रतमुच्यन्ते । अहिंसाया जात्यवच्छेदो यथा ब्राह्मणं न हनिष्यामि १ देशावच्छेदस्तीर्थे न हनिष्यामि २ कालावच्छेदश्चतुर्दश्यां न हनिष्यामि ३ समयावच्छेदो देवाद्यर्थव्यतिरिक्तसमये न हनिष्यामि ४ । एवंसत्यादिषु चतुर्ष्वपि योज्यम् । अहिंसादिष्वेकोजात्यादिचतुर्भिरवच्छिन्नोव्रतैकपाद उच्यते । द्वौ च जात्यादिचतुर्भिरवच्छिन्नौ व्रतस्य द्वौ पादावुच्येते । त्रयश्च जात्यादिचतुर्भिरवच्छिन्ना व्रतस्य त्रयः पादा उच्यन्ते । चत्वारश्च जात्यादिचतुर्भिरवच्छिन्नाश्चतुष्पात् पूर्णंव्रतमुच्यते । पञ्चचैते जात्यादिचतुर्भिरवच्छिन्नामहाव्रतमुच्यन्ते । एकश्चैकेनजात्यादिनाऽवच्छिन्नःपादचतुर्थांशः पाद पाद उच्यते । एतेऽपि विशेषाः । महाव्रतमित्यत्र व्रतविशेषणीभूतेन महच्छन्देन सूचितावोद्धव्याः । जात्याद्यवच्छिन्नाश्चेविशेषणोपादानेन तु जात्यादि चतुर्भिरनवच्छिन्ना अपि पञ्चैतेऽहिंसादयोयमाभवन्तीत्यपि ध्वनितम् । ते यथा जात्यनवच्छिन्नाः—कमपि नहनिष्यामि १ देशानवच्छिन्नाः—कुत्रापि न हनिष्यामि २ कालानवच्छिन्नाः—कदापि न हनिष्यामि ३ समयानवच्छिन्नाः—कस्मिन्नर्थसमये न हनिष्यामि ४ जाति देशसमयानवच्छिन्नाश्चैते महामहाव्रतमुच्यन्ते । "यमाजात्यनवच्छिन्नाः"—इति पाठे तु जातिपदस्योपलक्षणत्वेन जाति देशकालसमयानवच्छिन्ना इत्यर्थः । एतत्पक्षे जाति देशकालसमयानवच्छिन्नानां सार्वभौमानां चैषां महाव्रतत्वं तदवच्छिन्नानान्तु व्रतमात्रत्वमेवेति सर्वथैव सर्वदा परिपालनीया यमाः ॥ यमान् सम्प्रदर्श्य नियमान् दर्शयति—"नियमा"इति ।

नियमाश्शौचसन्तोष तपस्स्वाध्ययनार्प्पणाः ।

वितर्कबाधने तेषाम्भावयेत् प्रतिपक्षिणः ॥१७॥

शौचं द्विविधं मृज्जलादिभिर्वाह्यं तच्छरीरस्य, मैत्र्यादिभिश्वान्तरं तच्च चित्तस्य । सन्तोषोधिकस्यानुपादित्सा । तपश्शीतोष्णादिद्वन्द्वसहनं यथायोगं कृच्छ्रचान्द्रायणादीनामनुष्ठानञ्च । स्वाध्यायः प्रणवादि पवित्र मन्त्राणां जपोऽध्यात्मशास्त्राध्ययनं वा । अर्प्पणा । सर्वक्रियाणां परमगुरावीश्वरे समर्प्पणम् । तदेतत्प्रणिधानमप्युच्यते । तेषां—यम नियमानाम् । वितर्काः हिंसादयस्तैर्बाधने सति तेषां प्रतिपक्षिणः—विरोधिनः । भावयेच्चिन्तयेत् । यदा चास्य योगिनोहनिष्यामि ब्राह्मणमनृतमपि वदिष्यामि परस्वमपि हरिष्यामि परदारांश्चाप्यभिगमिष्यामि भोगसाधनानि चापि ग्रहीष्यामि मृज्जलादिना नोपस्थकरपादादीनि निर्म्मलीकरिष्यामि मनश्च रिपुनादिषु योक्ष्यामि सत्यपि भोगसाधनेऽधिकमप्यादास्यामि शीतोष्णादिद्वन्द्वान्नसहिष्ये व्रतमपि न करिष्यामि पवित्रमन्त्रजपमपि न करिष्याम्यध्यात्मशास्त्रं च नाध्येष्ये—ईश्वरार्प्पणं न करिष्यामि—इति हिंसादयो वितर्का वाधेरंस्तदैवैवं चिन्तयेत् । हा हन्तातीवोल्वणसंसारांगारतप्ताङ्गेन योगाग्रहग्राहग्रहीतवुद्धिना मयाऽपहाय हिंसादीन् महताप्रयासेनासादितायोगधर्म्माः कथमल्पस्य कृते तानुपाददानः श्वतुल्यो न भविष्याम्यतो नैते पुनस्स्वीकार्य्या येन भूयस्संसारांगारेषु परिपचेयम् ॥ १७ ॥ हिंसादीनां स्वरूप भेद प्रकार कारणानि क्रमेण दर्शयति—। "हिंसादय"इति ।

हिंसादयोवितर्कास्युः कृतकारितमोदिताः ।

मृदुमध्याधिमात्राश्च लोभक्रोधादि पूर्वकाः ॥१८॥

वितर्का इति स्वरूपस्य दर्शनम् । कृतकारित मोदिता इति भेदस्य । मृदुमध्याधिमात्राश्चेति प्रकारस्य । लोभक्रोधादिपूर्वका इति कारणस्य । आदिना मोह परिग्रहः । हिंसा कृता कारिता-अनुमोदिता च त्रिविधा तत्र कृता स्वेनानुष्ठिता, कारिताऽन्येना-नुष्ठापिता, अनुमोदिता केनचिद्धिंसायां क्रियमाणायां साध्वनु-ष्ठीयत आयुष्मतेत्यनुमोदनकर्मीभूता । सा प्रत्येकं लोभादि पूर्वकत्वभेदेन विभज्यमाना नवविधा भवति सापि प्रत्येकं मृद्वादिभेदेन विभज्यमाना सप्तविंशतिविधा भवति सा सप्त-विंशतिविधापि पुनर्मृद्वादि भेदेन प्रत्येकं विभज्यमानै-काशीतिविधा जायते । तथाहि—कृतहिंसा १ कारितहिंसा २ अनुमोदित हिंसा ३ लोभजकृतहिंसा १ क्रोधजकृतहिंसा २ मोहजकृत हिंसा ३ लोभजकारितहिंसा ४ क्रोधजकारित हिंसा ५ मोहजकारितहिंसा ६ लोभजानुमोदित हिंसा ७ क्रोधजानुमोदितहिंसा ८ मोहजानुमोदितहिंसा ९ मृदुलोभज-कृत हिंसा १ मध्यलोभजकृत हिंसा २ तीव्रलोभजकृत हिंसा ३ मृदुक्रोधजकृत सिंसा ४ मध्यक्रोधजकृत हिंसा ५ तीव्रक्रोध-जकृत हिंसा ६ मृदुमोहजकृत हिंसा ७ मध्यमोहजकृत हिंसा ८ तीव्रमोहजकृत हिंसा ९ मृदुलोभजकारित हिंसा १० मध्यलोभजकारित हिंसा ११ तीव्रलोभज कारित हिंसा १२ मृदुक्रोधजकारित हिंसा १३ मध्य क्रोधजकारित हिंसा १४ तीव्रक्रोधजकारित हिंसा १५ मृदुमोहजकारित हिंसा १६ मध्यमोहजकारित हिंसा १७ तीव्रमोहजकारित हिंसा १८ मृदुलोभजानुमोदितहिंसा १९ मध्यलोभजानुमो-दित हिंसा २० तीव्रलोभजानुमोदित हिंसा २१ मृदुक्रोधजा-नुमोदित हिंसा २२ मध्यक्रोधजानुमोदित हिंसा २३ तीव्र-क्रोधजानुमोदित हिंसा २४ मृदुमोहजानुमोदित हिंसा २५

मध्यमोहजानुमोदित हिंसा २६ तीव्रमोहजानुमोदित हिंसा २७ मृदु मृदुलोभजकृतहिंसा १ मध्यमृदुलोभजकृत हिंसा २ तीव्रमृदुलोभजकृत हिंसा ३ मृदुमध्यलोभजकृत हिंसा ४ मध्यमध्यलोभजकृत हिंसा ५ तीव्रमध्यलोभजकृत हिंसा ६ मृदुतीव्रलोभजकृत हिंसा ७ मध्यतीव्रलोभजकृत हिंसा ८ तीव्रतीव्रलोभजकृत हिंशा ९ मृदुमृदुक्रोधजकृतहिंसा १० मध्यमृदुक्रोधजकृत हिंसा ११ तीव्रमृदुक्रोधजकृत हिंसा १२ मृदुमध्यक्रोधजकृत हिंसा १३ मध्यमध्यक्रोधजकृत हिंसा १४ तीव्रमध्यक्रोधजकृतहिंसा १५ मृदुतीव्रक्रोधजकृतहिंसा १६ मध्यतीव्रक्रोधजकृत हिंसा १७ तीव्रतीव्रक्रोधजकृत हिंसा १८ मृदुमृदुमोहजकृत हिंसा १९ मध्यमृदुमोहजकृत हिंसा २० तीव्रमृदुमोहजकृत हिंसा २१ मृदुमध्यमोहजकृत हिंसा २२ मध्यमध्यमोहजकृत हिंसा २३ तीव्रमध्यमोहजकृत हिंसा २४ मृदुतीव्रमोहजकृत हिंसा २५ मध्यतीव्रमोहजकृत हिंसा २६ तीव्रतीव्रमोहजकृत हिंसा २७ मृदुमृदुलोभजकारित हिंसा २८ मध्यमृदुलोभजकारित हिंसा २९ तीव्रमृदुलोभजकारित हिंसा ३० मृदुमध्यलोभजकारित हिंसा ३१ मध्यमध्यलोभजकारित हिंसा ३२ तीव्रमध्यलोभजकारित हिंसा ३३ मृदुतीव्रलोभजकारित हिंसा ३४ मध्यतीव्रलोभजकारित हिंसा ३५ तीव्रतीव्रलोभज कारित हिंसा ३६ मृदुमृदुक्रोधजकारित हिंसा ३७ मध्यमृदुक्रोधजकारितहिंसा ३८ तीव्रमृदुक्रोधजकारितहिंसा ३९ मृदुमध्यक्रोधजकारित हिंसा ४० मध्यमध्यक्रोधजकारित हिंसा ४१ तीव्रमध्यक्रोधजकारित हिंसा ४२ मृदुतीव्रक्रोधजकारित हिंसा ४३ मध्यतीव्रक्रोधजकारित हिंसा ४४ तीव्र तीव्र क्रोधजकारित हिंसा ४५ मृदुमृदुमोहजकारित हिंसा ४६ मध्यमृदुमोहजकारित हिंसा ४७ तीव्रमदमोहज-

कारित हिंसा ४८ मृदुमध्यमोहजकारित हिंसा ४९ मध्यमध्य-मोहजकारित हिंसा ५० तीव्रमध्यमोहजकारित हिंसा ५१ मृदुतीव्रमोहजकारित हिंसा ५२ मध्यतीव्रमोहजकारित हिंसा ५३ तीव्रतीव्रमोहजकारित हिंसा ५४ मृदुमृदुलोभजानुमोदित-हिंसा ५५ मध्यमृदुलोभजानुमोदित हिंसा ५६ तीव्रमृदुलोभ-जानुमोदित हिंसा ५७ मृदुमध्यलोभजानुमोदित हिंसा ५८ मध्यमध्यलोभजानुमोदित हिंसा ५९ तीव्रमध्यलोभजानुमोदित हिंसा ६० मृदुतीव्रलोभजानुमोदित हिंसा ६१ मध्यतीव्रलोभ-जानुमोदित हिंसा ६२ तीव्रतीव्र लोभजानुमोदित हिंसा ६३ मृदुमृदुक्रोधजानुमोदित हिंसा ६४ मध्यमृदुक्रोधजानुमोदित हिंसा ६५ तीव्रमृदुक्रोधजानुमोदित हिंसा ६६ मृदुमध्यक्रोध-जानुमोदित हिंसा ६७ मध्यमध्यक्रोधजानुमोदित हिंसा ६८ तीव्रमध्य क्रोधजानुमोदित हिंसा ६९ मृदुतीव्रक्रोधजानुमोदित हिंसा ७० मध्यतीव्रक्रोधजानुमोदित हिंसा ७१ तीव्रतीव्रक्रोध-जानुमोदित हिंसा ७२ मृदुमृदुमोहजानुमोदित हिंसा ७३ मध्यमृदुमोहजानुमोदित हिंसा ७४ तीव्रमृदुमोहजानुमोदित हिंसा ७५ मृदुमध्यमोहजानुमोदित हिंसा ७६ मध्यमध्य-मोहजानुमोदितहिंसा ७७ तीव्रमध्यमोहजानुमोदित हिंसा ७८ मृदुतीव्रमोहजानुमोदित हिंसा ७९ मध्यतीव्रमोहजानुमोदित हिंसा ८० तीव्रतीव्रमोहजानुमोदित हिंसा ८१ काल समय जाति जन्तु भेदादपरिसङ्ख्येयं हिंसेति मुख्यैवैकाशीति प्रकारा दर्शिता ॥ एवमसत्यादयोऽपि वितर्का बोध्याः ॥१८॥ दुःखाज्ञा-नान्तफलकतया नैते स्वीकार्य्या इति प्रतिपक्षभावनमाह—। दुःखादीति ।

**दुखादिफलमेषां चेतिप्रतिपक्षभावनम् ।**

**अहिंसायां प्रतिष्ठायां वैरत्यागोऽस्य सन्निधौ ॥१९॥**

यमनियमादीनामभ्यासोत्कर्षेण यास्सिद्धयोभवन्ति ताः क्रमेण दर्शयन्नादावहिंसासिद्धिं दर्शयति—। अहिंसायामिति। अहिंसां भावयतोऽस्य यदाऽहिंसा प्रतिष्ठिता भवति तदा सहजविरोधिनामप्यहिनकुलादीनामस्य सन्निधावन्योन्यंवैरत्यागो भवति। यद्वा वैरत्यागोऽस्य सन्निधावित्यस्यायमर्थः। अहिसिंहनकुलादीनां योगिना सह। अहिसिंहनकुलादिभिश्च सहास्य योगिनः सन्निधौ वैरत्यागोभवति। अहिंसां भावयन्तमेनं न बाधन्तेऽहि सिंह व्याघ्र नकुलादयस्तैस्सहाभयं विहरतियोगी ॥ १९ ॥ सत्याभ्यासोत्कर्षफलमाह—। "क्रियाणा"मिति।

**क्रियाणां फलमाप्नोति यदा सत्यं प्रतिष्ठते।**
**रत्नान्यस्योपतिष्ठन्तेऽस्तेयप्रतिष्ठितिर्यदा ॥२०॥**

यदाऽस्य सत्यप्रतिष्ठा भवति तदाऽस्य वचनादन्योऽकृत्वापि यागादिकाः क्रियास्तत्फलमश्नुते किमु तस्य वाच्यं स तु सत्यसिद्ध्याऽप्रतिहतवाग् भवति। धार्म्मिको भूया इति वदति यदा कश्चित्प्रति तदा स धार्मिको भवति। स्वर्गं प्राप्नुहि—इतिब्रूते यदा तदा स स्वर्गं प्राप्नोति। अस्तेयोत्कर्षस्य फलमाह। "रत्नानीति"। अस्तेयमभ्यस्यतोऽस्य योगिनस्तदभ्यासप्रकर्षान्निरभिलाषस्यापि सर्वतारत्नान्युपतिष्ठन्ते ॥२०॥ योब्रह्मचर्य्यमभ्यस्यति तस्य तत्प्रकर्षान्निरतिशयसामर्थ्यलाभोभवतीत्याह—। "ब्रह्मचर्य्ये"ति।

**ब्रह्मचर्यप्रतिष्ठायां वीर्य्यलाभोऽपरिग्रहे।**
**स्थैर्य्ये जन्मकथन्तायास्संबोधस्तस्य जायते ॥२१॥**

वीर्य्यनिरोधोहि ब्रह्मचर्य्यं तदभ्यासाच्छरीरेन्द्रियमनस्सु निरतिशयवीर्य्यलाभो भवति यल्लाभादपरिमितं बोधमुपलभ्यान्येष्वपि तमाधातुं समर्थो भवति॥ भोगसाधनानां परिग्रह एव

परिग्रहो न शरीरमात्रपरिग्रहः पारिग्रहः। भोगसाधनपरिग्रहे सत्येव वृत्तीनां वहिर्मुखतया प्रज्ञोत्कर्षोऽसम्भवोऽपरिग्रहस्थैर्य्यं तु जन्मकथन्तायावोधसमुकर इत्याह—। "अपरिग्रह" इति। कथमित्यस्य भावः कथन्ता जन्मनः कोऽहमासं कथमहमासं किं स्विदिदं कथं स्विदिदं के भविष्यामः कथं वा भविष्याम इत्येवं रूपा कथन्ता जन्मकथन्ता तस्याः सम्बोधः सम्यग्ज्ञानमपरिग्रहं भावयतो भवति ॥२१॥ यमस्थैर्य्ये सिद्धीरभिधाय नियमस्थैर्य्येसिद्धीरभिदधानस्तावच्छौचसिद्धिमाह—। स्वेति।

स्वशरीरे घृणा शौचादसंसर्गः परैस्सह।
सत्वशुद्धिस्तदुत्कर्षस्त्वैकाग्र्येन्द्रियजेतृते ॥२२॥
आत्मदर्शनयोग्यत्वं सुखलाभोह्यनुत्तमः।
सन्तोषाज्जायते कायेन्द्रिय प्रसाधकात्तपः ॥२३॥
भवेत्स्वाध्ययनादिष्टदेवतासम्प्रयोजनम्।
योगसिद्धिर्गुरौ भक्तेस्स्थिरं सुखमासनम् ॥२४॥

मृज्जलादिभिः कायक्षालनेनापि तच्छुद्धिमपश्यतोऽस्य शौचात् स्वशरीरे नेदं शरीरं वर्षायुतैरपि मृष्टं भवितुमर्हति यतस्स्थान बीजोपष्टम्भनिधनेभ्योऽशुचोत्येवंविधा घृणा जायते तत्र स्थानाशुद्धिः। मलमूत्रादिदूषिते मातृगर्भगर्त्तेऽवस्थानम्। बीजाशुद्धिः। रक्तवीर्य्याभ्यांसमुत्पत्तिः। उपष्टम्भाशुद्धिः। मांसास्थिस्नाय्वादिभिरवयवरचना। निधनाशुद्धिः मरणम्। प्राणवियोगी सुखाद्यनयवत्वेनस्वंत्वा। ततश्चैवं दोषदर्शिनः परैस्तदभिन्नैस्सार्द्धमसंसर्गोऽसम्बन्धः। शौचस्य फलमाह—"सत्त्वेति"। सत्त्वस्य बुद्धितत्त्वस्य शुद्धिः—रजस्तमोभ्यामनभिभवः। तदुत्कर्षः सत्त्वस्याधिक्यम्। ऐकाग्र्यं चेतसःस्थैर्य्यम्। इन्द्रियजेतृता

विषयेभ्य इन्द्रियवृत्तिच्छेदः ॥२२॥ आत्मदर्शनयोग्यत्वं पुरुष-दर्शने बुद्धितत्त्वस्य सामर्थ्यम्। एते क्रमेण कार्य्य कारण भाव-मुपगता जायन्ते॥ सन्तोषफलमाह—सुखेति। सन्तोषाभ्यास वशात्तथाविधातीवोत्तमसुखस्य लाभोजायते यस्य वाह्यं सुखम-युतांशेनापि न समं भवति। समभ्यसमानं तपश्चेतसः क्लेशादि लक्षणाशुद्धिसंक्षयद्वारा कायेन्द्रियाणामुत्कर्षमादधातीति तपसः फलमाह—कायेति। कायेन्द्रियप्रसाधकम्। तयोस्सिद्धिकार-णम्। तत्र कायस्य सिद्धिर्महत्त्वाणुत्वादि यथेच्छम्। इन्द्रियाणां च सूक्ष्म व्यवहित विप्रकृष्ट दर्शन सामर्थ्यं तपसस्सम्पद्यते॥२३॥ स्वाध्यायफलमाह—भवेत्स्वाध्ययनादिति। मन्त्रजपादि लक्षणात् स्वाध्ययनादिष्टाया अभिलषिताया देवतायाः सम्प्रयोजनं सम्प्र-योगः प्रत्यक्षदर्शनम्भवति न केवलं दर्शनमात्रमपि तु कार्य्येऽपि सा वर्त्तते। प्रणिधान फलमाह—। योगीति। गुरौ—ईश्वरे। भक्तेः सर्वक्रियाणां फलानाकांक्षिततया समर्पणेन तस्यै-वाराध्यत्वज्ञानात्। योगसिद्धिः समाधिसिद्धिर्भवति॥ सह-सिद्धिभिर्यमनियमानुक्त्वाऽऽसनमभिधत्ते—सुस्थिरमिति। यदा-ऽऽसनं सुस्थिरं निष्कम्पं सुखमयत्नम्भवति तदा योगाङ्गभावं भजते—आसनानि तु पद्मासनं भद्रासनं स्वस्तिकासनं दण्डासनं सोपाश्रयं पर्य्यङ्कं क्रौञ्चनिषदनं मयूरासनमित्यादीन्येषां विशेषस्तु हठयोगदीपिकायामिति तत्रैव द्रष्टव्योन पुनरिह प्रपञ्च्यते॥ २४॥ आसनस्थैर्य्योपायमाह—। अनन्तस्येति।

**अनन्तस्य समापत्त्या कृत्या शिथिलया तथा।**
**ईरितमासनस्थैर्य्यं ततोद्वन्द्वैरधर्षणम् ॥२५॥**

अत्र षष्ठ्यर्थो विषयता तस्याः प्रकृतौ निष्ठतयाऽन्वयस्तस्याश्च स्वनिरूपकविषयिताश्रयत्व सम्बन्धेन समापत्तौ तथाचानन्तनि-

ष्टविषयता निरूपक विषयिताश्रयसमापत्त्येत्यर्थः अनन्तश्च शेषो विष्णुर्वा यथाभिमतोध्येयः कृत्वा शिथिलया प्रयत्नशैथिल्येन अक्लेशेनेत्यर्थः। ईरितम्। कथितम्। आसनस्य स्थैर्य्यम्। स्थिरे चासनेऽनन्तरं योगिनोद्वन्द्वैः शीतोष्णादिभिः। अधर्षणम नभिघातोऽनभिभवो भवति ॥ २५ ॥ आसनस्थैर्य्ये सति श्वास प्रश्वासयोर्गतिविच्छेदलक्षणः प्राणायामोभवतीत्याह। सतीति।

सति तस्मिंश्च विच्छेदः श्वासप्रश्वासयोर्गतेः।
प्राणायामस्तु वै वाह्याभ्यन्तरस्तम्भवृत्तिकः ॥२६

वाह्यस्य वायोराचमनं श्वासः कोष्ठस्य वायोर्निस्सारणं प्रश्वासः। तयोर्गतिर्गमनरूपायाः क्रियायाः विच्छेदोऽभावः प्राणायाम उच्यते स च त्रिविधः। वाह्यवृत्तिको रेचकः। अभ्यन्तरवृत्तिकः पूरकः। स्तम्भवृत्तिकः कुम्भकः ॥२६॥ देशकाल-सङ्ख्याभिरयं प्राणायामोदीर्घसूक्ष्मसंज्ञोभवतीत्याह—। दीर्घेति।

दीर्घसूक्ष्म इतिख्यातस्संख्यासमयदेशतः।
चतुर्थो विषयाक्षेपो भासावारक्षतिस्ततः ॥२७

सङ्ख्यया—इयतोवारान् कृतः। समयेन—षट्त्रिंशन्मात्रा-दिना कालेन। देशेन द्वादशाङ्गुलप्रमाणेन। एवंविधभेदोप-लक्षितो दीर्घसूक्ष्मसंज्ञां लभते तत्र दीर्घसंख्यासमयदेशैः। दीर्घसंज्ञांलभतेऽल्पसंख्यासमयदेशैश्च सूक्ष्मसंज्ञाम्। त्रीन् प्राणायामानभिधाय चतुर्थमाह—। चतुर्थ इति। विषयाक्षेपी—द्वादशाङ्गुल्यादिपर्य्यन्तोवाह्यो विषयः। हृदयादिराभ्यन्तरो-विषयः एतौ द्वावाक्षिप्य भवतीत्यर्थः। अयमपि स्तम्भवृत्तिकः महाकुम्भक उच्यते पूर्वस्मात् कुम्भकादस्यायं विशेषः। पूर्वः श्वास-प्रश्वासयोर्विषयानवधारणादक्रमेण जायतेऽयन्तु श्वासप्रश्वासयो-र्विषयावधारणक्रमेणोभयाक्षेपपूर्वकः प्राणायामः। अस्मात् किम्भ-

वतीत्याकांक्षायां तत्फलमाह—। भासेति। भासः प्रकाशः बुद्धेः सात्त्विकः परिणामः। येन यथावद्योगी जानाति तस्य आवारः—आवरणं संसारकारणं क्लेशस्वरूपं कर्म्म। तस्य क्षति-र्निवृत्तिः ततस्तस्मात् प्राणायामाद्भवतीत्यर्थः॥ २७॥ प्राणायामैः क्षीणदोषं मनोयत्र धार्य्यते तत्र स्थिरंभवति न पुनर्विक्षेपं भजते इति प्राणायामस्य फलान्तरं दर्शयन् प्रत्याहारस्य स्वरूपफले दर्शयति—। धारणास्विति।

धारणासु च योग्यत्वं मनसश्चित्तरूपता।

प्रत्याहारो हृषीकाणां परमा वश्यता ततः॥२८

इति योगमकरन्दे साधनाख्यो द्वितीयः पादः॥ २॥

विषयाभिमुख्येन वर्त्तमानानां हृषीकाणामिन्द्रियाणां विष-याभिमुख्यं परित्यज्य या चित्तरूपता चित्तस्वरूपानुकारिता चित्तनिरोधानुरुद्धता स प्रत्याहारः। इन्द्रियाणि प्रति—प्रत्याव-र्त्य संनिवर्त्य विषये भ्य आहृत्य—आह्रियन्ते आकृष्यन्ते येन स इति विग्रहः। अथवा प्रत्याहरणं प्रत्याहारः। विषयेभ्योविच्छेदः। अयम्भावः चित्त निरोधेन विषयेभ्योनिरुद्धानीन्द्रियाणि नोपाया-न्तरमपेक्षन्ते—इन्द्रियान्तरनिरोधे त्विन्द्रियान्तरनिरोधवदुपायम-पेक्षन्त इति चित्त स्वरूपानुकारितेवेन्द्रियाणां प्रत्याहारः। ततः—एवमभ्यस्यमानात् प्रत्याहारात्। इन्द्रियाणां परमा उत्कृष्टा वश्यता आयत्तता सम्पद्यते। वाह्यविषयाभिमुखतां नीयमाना-न्यपि न वाह्यविषयेषु गच्छन्तीन्द्रियाणीति भावः।

इति श्रीयोगमञ्जर्य्यां योगमकरन्दव्याख्यानरूपायां कुलयश-स्विशास्त्रिप्रणीतायां द्वितीयःपादः॥२॥

---

## तृतीयः पादः ।

पूर्वोक्तेष्वङ्गेषु धारणादीनां विशेषेण स्वरूपादि दर्शयितुमपरं विभूतिपादमारभमाणोयमनियमासन प्राणायामप्रत्याहारसिद्ध्युत्तरं निर्बाधे देशे ऋजुकायेन जितद्वन्द्वेन सम्प्रज्ञातसमाधेरभ्यासाय चेतस्स्थिरंकर्त्तव्यमितिधारणामाह—। धारणेति ।

**धारणा देशबन्धस्स्याद्ध्यानं चित्तैकतानता ।**
**समाधिरर्थनिर्भासा त्रयमेकत्रसंयमः ॥१॥**

नाभिचक्रे हृदयपुण्डरीके मूर्द्ध्नि ज्योतिषि नासिकाग्रे जिह्वाग्रे इत्येवमादिष्वाभ्यन्तरदेशेषु ध्रुवे चन्द्रे सूर्ये पर्वताग्रे इत्येवमादिषु वाह्यदेशेषु वा विषयान्तरपरिहारेण यच्चेतसस्स्थिरीकरणं सा धारणेतुग्रच्यते । ध्यानमाह—। ध्यानमिति । यदेव धारणायामालम्बनो कृतं तस्मिन्नालम्बने या चित्तस्यैकतानता । विसदृशप्रत्ययप्रवाहपरिहारेण सदृशप्रत्यय प्रवाहीकरणं मनसस्तद् ध्यानम् । ध्यानं यदाऽर्थाकारसमावेशादुद्भूतार्थस्वरूपमर्थाकारणेव निर्भासते तदा तदेव समाधिरुच्यत इति समाधिमाह—समाधिरिति । सम्-सम्यक् । आधीयते—एकाग्रीक्रियत यत्र मनस्स समाधिः चेतसस्समाधानं वा । ध्यानात्समाधेरयं विशेषः । ध्याने ध्यातृध्येयध्यानरूपा त्रिपुटी भासते समाधौ तु ध्येयस्वरूपार्थाकार निर्भासश्चित्तं न तत्र सा भासत इति । नचाङ्गिनोऽपि सम्प्रज्ञातसमाधेरर्थनिर्भासकत्वेनाङ्गाङ्गिनोरभेदः प्रसक्त इति, अङ्ग समाधौनिश्शेषतोध्येयरूपस्याभानात् । भवेत्तदाङ्गाङ्गिनोरभेदश्चेत्स्यादङ्गसमाधौ निश्शेषतोधेयरूपभानमङ्गिनि तु सम्प्रज्ञाते साक्षात्कारोदये निश्शेषतोधेयस्वरूपभानसम्भवादङ्गसमाध्यविषयविषयाणां च भानादित्यङ्गाङ्गिनोर्विभागः । धारणादित्रयस्य तान्त्रिकीं परिभाषामाह—। त्रयमिति । एकत्र—एक

स्मिन्विषये धारणाध्यानसमाधिलक्षणं त्रिकं वर्त्तमानं संयम उच्यते ॥ १ ॥ समाधिप्रज्ञायास्संयमजयात् प्रसरोभवती त्याह—। प्रज्ञेति ।

प्रज्ञालोकोजयात्तस्य नियोगस्तस्यभूमिषु ।
अन्तरङ्गं त्रयं तेभ्योवहिरङ्गं परञ्च च ॥२॥

तस्य-संयमस्य । जयात्—उत्कृष्टाभ्यासेन स्वायत्तीकरणात् । प्रज्ञायास्समाधिप्रज्ञायाः । आलोकः प्रकाशः प्रसरो भवति । संयमस्योपयोगमाह—। नियोग इति । तस्य—संयमस्य । भूमिषु स्थूलसूक्ष्मालम्बनभेदेनावस्थितासु चित्तावस्थासु । नियोगोविनियोग उपयोगः । संयमेन पूर्वां पूर्वां भूमिञ्जित्वा परां-परां जयेत् नह्यकृतसंयमोभूमिविजयी भवति नह्नि संयममन्तरा-जितपूर्वभूमिरपरां जेतुमोष्टे येन संयमस्यानुपयोगोभूमिषु भवेत् । पूर्वापर भूमिसत्तायान्तु योग एव मानं नह्नि योगमन्तराऽस्याभूमे-रियमनन्तरा भूमिरित्यवगन्तुंशक्यते—तथाचोक्तमिदम्भाष्ये । "भूमेरस्या इयमनन्तरा भूमिरित्यत्र योग एवोपाध्यायः कथमेव-मुक्तं योगेन योगोज्ञातव्यो योगो योगात्प्रवर्त्तते योऽप्रमत्तस्तु योगेन स योगे रमते चिरमिती" तिसिद्धस्संयमस्य भूमिषु विनियोगः । तदेतत्संयमसंज्ञकन्धारणादियोगाङ्गत्रयं पूर्वेभ्योयमादिभ्योयोगा-ङ्गेभ्यः पारम्पर्य्येण समाधेरुपकारकेभ्योऽन्तरङ्गमित्याह—। अन्त-रङ्गमिति । तेभ्यः पूर्वोक्तेभ्योयमादिभ्यः पञ्चभ्यः । धारणा-ध्यानसमाधिलक्षणं त्रयं सम्प्रज्ञात समाधेरन्तरङ्गं सम्प्रज्ञातसमा-धिस्वरूपनिष्पादकत्वात् । यद्यपि धारणादित्रयस्य सम्प्रज्ञातसमा-ध्यन्तरङ्गत्वमुक्तं तथापिनैषां त्रयाणामेव समाध्यन्तरङ्गत्वमेषा-मेकस्मिन्विषयसत्त्वेऽप्येकदैकत्र सत्त्वाभावान्नह्नि धारणादशायां ध्यानं नह्नि ध्यानदशायां धारणा नह्नि समाधिदशायां धारणाध्याने

नहि धारणाध्यानदशायां समाधिस्सम्भवति। यदि तु समाधिदशायां त्रयाणां स्वीकारः कार्य्ये कारणस्यानुस्यूतत्वादितिध्यानधारणयोरन्तरङ्गत्वमित्युच्येत तदापि कारणरूपेण तयोस्तत्रानुगतत्वेऽपि न स्वेन रूपेण सम्प्रज्ञातसमाधि जनकत्वमपितु समाधिस्वरूपकार्य्येणेति न तयोरन्तरङ्गत्वं यदि च समाधिरपि धारणाध्यानयोः परिपाकावस्थेति समाधिर्न ताभ्यामतिरिच्यत इत्युच्यते तदा ध्यानमपि धारणायाः परिपाकावस्थेति न धारणास्वरूपतोतिरिक्तमिति परिपक्वधारणैव सम्प्रज्ञातसमाधिजनिका तथाच ध्यानसमाध्योःपृथक् समाध्यङ्गत्वसंकीर्त्तनञ्चतिरिति योगस्याष्टाङ्गसाध्यत्ववादोऽपि व्याहन्येत तद्वादसंरक्षणाय स्वरूपतोऽवस्थातो वा कथञ्चिदपि तेषां भेदानुसरणे देशबन्धरूपा धारणा। ध्यातृध्येयध्यानकलनावद्ध्यानम्। ध्यातृ ध्येय ध्यानरूपकलनारहितार्थमात्रावभासकस्समाधिरिति. तेषां त्रयाणामेकदैकत्र सत्त्वासम्भव इति न ध्यानधारणयोस्सम्प्रज्ञातसमाध्यन्तरङ्गत्वमपितु समाधेः। धारणादि त्रिकस्य सम्प्रज्ञातसमाध्यन्तरङ्गत्वोक्तिस्तु यमाद्यपेक्षया सङ्गच्छत इति धारणाध्यान समाधि लक्षणत्रयं पूर्वेभ्योयमादिभ्यस्सम्प्रज्ञातसमाधावन्तरङ्गं परत्र-सम्प्रज्ञातसमाध्यनन्तर जायमानासम्प्रज्ञातसमाधौ वहिरङ्गं पारम्पर्य्येणोपकारकत्वात्—तत्र साक्षादुपकारकस्य सम्प्रज्ञातस्यैवान्तरङ्गत्वम् ॥२॥ धारणादित्रिकस्य विशेषमभिधाय सम्प्रति चेतसस्त्रीन् परिणामान् पुरुषातिरिक्तस्य निखिलस्य,परिणामित्वं दर्शयितुमभिधत्ते। निरोध इति।

निरोधश्शान्तवाहीकस्समाध्येकाग्रते तथा।

परिणामस्त्रिधा प्रोक्तश्चेतसोयंमनोषिभिः ॥३॥

मनोषिभिर्योगिभिश्चित्तस्य परिणामधर्म्मकस्य त्रिधा त्रिप्रकारैः। परिणामः-पूर्वावस्थापरित्यागेनावस्थान्तरप्राप्तिरूपः।

प्रोक्ताः-कथितः। तद्यथा निरोधपरिणामः १ समाधिपरिणामः २ एकाग्रतापरिणामः ३ यदा व्युत्थान संस्कारास्तिरोदधते निरोध-संस्काराश्च प्रादुर्भवन्ति तदा निरोधलक्षणचित्तस्योभयवृत्तित्वाद-न्वयोयस्स निरोधपरिणामः। स च सदृशप्रत्ययप्रवाहेण चेतस-श्शान्तिमाधत्ते। यदा सर्वार्थरूपस्य विक्षेपस्य क्षय एकाग्रता-यास्वाविर्भावस्तदैकाग्रतालक्षणचित्तस्यान्वयितयाऽवस्थानं समाधि-परिणामस्स च विक्षेपं प्रतिक्षिप्य चित्तैकाग्र्यं विधत्ते पूर्वस्माद-स्यायं विशेषस्तत्र व्युत्थानसंस्काराणां निरोध उद्भवश्चोत्तराणां निरोधसंस्काराणामिह तु विक्षेपस्यात्यन्तप्रतिक्षेपाद् व्युत्थान संस्काराणां पुनरनुत्पाद एकाग्रतायाः समुद्भवः। यदा समाहित चित्तस्यैकोवृत्तिविशेषः शान्तोऽपरस्तुवर्त्तमानस्तदोभयत्र समा-हितचित्तस्यान्वयित्वेनावस्थानमेकाग्रतापरिणामस्स चैकाग्रताया-दृढीकरणेनाचिरेण समाधिमुद्भावयति। समाधिपरिणामाद-स्यायं विशेषः समाधि परिणामे विक्षेपात्यन्तप्रतिक्षेपेणैकाग्रतास-मुत्पादोऽत्र तु द्वावपि समाहितचित्तत्वेनैकरूपालम्बनत्वेन च सदृशौ प्रत्ययावित्युक्तश्चेतसस्त्रिधा परिणामः। चित्तपरिणाम-वद् भूतेन्द्रियेष्वपि धर्म्मलक्षणावस्थापरिणामाःपरिणामसास्याद्-बोद्धव्या इत्याह। भूतेन्द्रियेष्विति।

**भूतेन्द्रियेषु तेनैव परिणामाः प्रकीर्त्तिताः।**
**धर्म्मौ धर्म्मानुपातौ स्याद्धर्म्माश्शान्तादयोमताः॥४**

तेन—त्रिविधेनोक्तचित्तपरिणामेन। भूतेषु स्थूलसूक्ष्मेषु पृथिव्यप्तेजोवाय्वाकाशेषु। इन्द्रियेषु-श्रोत्रत्वग्घ्राणदृग्जिह्वा वाग्दोर्भेद्राङ्घ्रि,पायुषु। परिणामाः—धर्म्मलक्षणावस्थारूपास्त्रयः। प्रकीर्त्तिताः। तत्र धर्म्मपरिणामोनामावस्थितस्य धर्म्मिणः पूर्वधर्म्मत्यागेन धर्म्मान्तरेणावस्थानम्। अनागतत्वं विहाय वर्त्त-

मानत्वेन, वर्त्तमानत्वं च विहायातीतत्वेनावस्थानं लक्षणपरिणामः। नहि क्षणमप्यपरिणम्यावतिष्ठते चित्त्यतिरिक्तं चलवृत्तमिति सर्वे चित्तिव्यतिरिक्ताः परिणामिनः। अथ कोऽयं धर्म्मी यस्यैते परिणामा इत्यपेक्षायां धर्म्मिस्वरूपमाह। धर्म्मीति। शान्तादय इति भाव प्रधानतया निर्देशो यथा द्व्येकयोर्द्विवचनैकवचने इत्यत्रान्यथा द्व्येकेष्विति स्यात्। आदिना चोदिताव्यपदेश्यादीनां स्वीकारस्तथाच कृतस्वव्यापारकत्वं शान्तत्वम्। क्रियमाणव्यापारकत्वमुदितत्वम्। करिष्यमाणव्यापारकत्वमव्यपदेश्यत्वम्। धर्म्मान् योऽनुपतति—अनुवर्त्तते-स्वीकुरुते। स धर्म्मी यथा हेमसृत्पिण्डादिकं मृत्पिण्डोघटरूपतो धर्म्मान्तरमुपसम्पद्यमानो धर्मतः परिणमति स च घटाकारोमृत्पिण्डस्य धर्मपरिणामः। स च शान्तत्वादीन्धर्म्माननुवर्त्तमानस्तदपेक्षया धर्मीत्यप्युच्यते मृत्पिण्डस्य घटरूपधर्म्मापेक्षया। स एव घटाकारोऽनागतलक्षणं हित्वा वर्त्तमानलक्षणं, वर्त्तमानलक्षणं च हित्वाऽतीतलक्षणं, यदा प्रतिपद्यते तदा लक्षणतःपरिणमतेऽतीतत्वादयश्च घटस्य लक्षणपरिणामायदपेक्षया घटस्य धर्मित्वमुक्तम्। तस्यैव घटस्य नवपुराणताद्यवस्था—अवस्था परिणामः। नवपुराणत्वाद्यपेक्षयापि घटोधर्मीतिसर्वस्स्वधर्म्माननुवर्त्तमानो धर्मीत्युच्यते ॥ ४ ॥ ननु कथमेकस्य धर्मिणोऽनेके परिणामाः परिणामनानाविधत्वे ज्ञापकहेतोरभावादितिज्ञापकमाह—। परिणामान्यतेति।

परिणामान्यताहेतुः क्रमभेदः प्रकीर्त्तितः।
अतीतानागतज्ञानं निरुक्तत्रयसंयमात् ॥५॥
शब्दार्थप्रत्ययानां च सङ्करोऽध्यासहेतुकः।
सर्वभूतरुतज्ञानं तत्प्रविभाग संयमात् ॥६॥

धर्म्माणां यःक्रमस्तस्य यो भेदःप्रतिक्षणमन्यत्वं परिणामान्यतायां परिणामनानाविधत्वे हेतुः—ज्ञापकम्। क्रमश्च समनन्तरं जायमानोधर्मः। यथा मृच्चूर्णस्य तस्याः पिण्डस्तस्य कपालस्तस्य घट एष धर्मपरिणामक्रम उच्यते लक्षणपरिणामक्रमश्च घटस्यानागतभावाद्वर्त्तमानभावः। वर्त्तमानभावादतीतभावः। अतीतस्य च नास्ति क्रमस्तदनन्तरधर्म्माभावान्नच वाच्यमस्त्यतीतस्य समनन्तरो वर्त्तमान इति, मुक्तानां पुनस्संसारप्रसक्तेः। मुक्तानां संसारहेतूपाधेरतीतस्य वर्त्तमानत्वास्वीकारात्संसारोच्छेदोऽभिमतः सम्प्रति तस्य वर्त्तमानत्वाङ्गीकारान्मुक्तानां पुनःसंसारप्रसक्तिर्दुरुद्धरेतिनातीतस्य क्रमः। अवस्थापरिणामक्रमश्च घटस्याभिनवस्य जीर्णत्वपुराणत्वादिस्तथाच क्रमभेदज्ञाप्यपरिणामभेदात्परिणममानधर्मिभेदोऽपि सम्भवति तद्यथा मृत्क्रमज्ञाप्यपरिणामभेदाच्चूर्णरूपधर्मिभेदः पिण्डक्रमज्ञाप्यपरिणामभेदान्मृद्रूपधर्मिभेदः। कपालक्रमज्ञाप्यपरिणामभेदात्पिण्डरूपधर्मिभेदः। घटक्रमज्ञाप्यपरिणामभेदात्कपालरूपधर्मिभेदः। एवमनागतादिक्रमज्ञाप्यपरिणामभेदादपि परिणममानधर्मिभेदोऽवगन्तव्यः। यद्वा क्रमभेद इत्यत्र क्रमपदव्यपदेश्यः कालः। सम्भवति कालभेदादप्येकस्य धर्मिणोऽनेकपरिणामयोगितेतिकालभेद एव परिणामान्यतायां हेतुः। इदानीं धारणा ध्यानसमाधिरूपस्योक्तसंयमस्य सिद्धीःप्रतिपादयन्नादौ धर्मलक्षणावस्थापरिणामसंयमसिद्धिम्प्रतिपादयति। अतीतेति। निरुक्तत्रयं धर्मलक्षणावस्थापरिणामलक्षणं तत्र संयमात्। साक्षात्क्रियमाणं परिणामत्रयं परिणममानधर्मिषु तत्परिणामेषु चातीतानागतज्ञानमुत्पादयति। एतेन वर्त्तमानेष्वपि परिणममानधर्मिं तत्परिणामेषु ज्ञानं सूचितं वेदितव्यं कण्ठतस्तदनुक्तिस्तु वर्त्तमानज्ञानस्य मध्यपातित्वेनोभयाभिधानेनैवाभिहितत्वात्सर्वसिद्धत्वाद्वा न च वर्त्तमान-

ज्ञानस्य सर्वसिद्धत्वेन योगिनस्तत्र न कोपि विशेष इति वाच्यम् । योगिनस्संयमबलेन विप्रकृष्ट सन्निहित व्यवहित स्थूल सूक्ष्मभावेन स्थितानां सर्वेषां वर्त्तमानानां परिणममानधर्मि तद्धर्म्माणां ज्ञानसम्भवात् । नहि विप्रकृष्टव्यवहितसन्निहितसूक्ष्मस्थूलभावेनावस्थिता वर्त्तमानपरिणामधर्म्मास्तद्वन्तोधर्म्मिणश्चार्वाग्दृष्टयामकृतसंयमानां ज्ञानगोचरीभूततांभवितुमर्हास्तस्मात्परिणामत्रय संयमाद्योगिनामनागतवर्त्तमानातीतपरिणममानधर्म्मिणां तद्धर्म्माणां च ज्ञानमुत्पद्यते-इति योगिनो विशेषः । निरुक्तत्रयसंयमादित्युक्त्या त्रिष्वेव परिणामेषु संयमादतीतानागतवर्त्तमानज्ञानं दर्शितं नतु प्रतेयकसंयमात् प्रत्येकसंयमे तु धर्म्मपरिणामसंयमादतीतज्ञानम् । लक्षणपरिणामसंयमादनागतज्ञानम् । अवस्थापरिणामसंयमाद्वर्त्तमान ज्ञानमितिक्रमः । न चास्य वैपरीत्यानङ्गीकारे किन्नियामकमिति वाच्यम्—वर्त्तमानतयाऽवस्थितस्यैव धार्म्मिणोऽभिनवत्व पुराणत्व कोमलत्व कठिनत्वाद्यवस्थासम्भवादित्यवस्थापरिणामसंयमेन वर्त्तमानज्ञानसम्भवः । भविष्यत्त्वहानं विना वर्त्तमानलक्षणत्वासम्भवादितिभविष्यद्भावेनावस्थितस्य लक्षणपरिणामेन ज्ञानसम्भवः । वर्त्तमानस्य धर्मिणः पूर्वधर्मनिवृत्तिमन्तराऽतीतताऽसम्भवादित्यतीततयाऽवस्थितस्य धर्मपरिणामसंयमेन ज्ञानसम्भव इत्युक्ताः परिणामत्रयसंयमसिद्धयः ॥५॥ वर्णध्वनिरूपस्य शब्दस्य सकलार्थानुगतजातिरूपस्यार्थस्य च तद्विषयकस्य बोधस्य च बुद्ध्येकरूपतासम्पादनादन्योन्यसङ्कीर्णत्वं तेषां च प्रविभागं विधाय विभक्तः शब्दः । विभक्तोऽर्थः । विभक्तः प्रत्ययः इति, तस्मिन् प्रविभागे यः संयमं करोति तस्य सर्वेषां मृगपशुपक्ष्यादीनामयं पशुरनेन शब्देनामुमर्थम्बोधयति—अयं विहगोऽनेन रवेणामुमाह्वयति । अयंमृगोऽनेन वचसैवंब्रवीतीति-

सर्वभूतशब्दज्ञानमुत्पद्यत इत्याह—। शब्दार्थेति ॥ ६ ॥ संस्कार-प्रत्यययोः संयमसिद्धिमादर्शयति—। पूर्वजातीति ।

पूर्वजाति परिज्ञानं संस्कार संयमादपि ।
प्रत्यये परचित्तस्य ज्ञानं संयमतो मतम् ॥७॥
न तत्सालम्बनं तस्याविषयत्वाच्च योगिनः ।
संयमात्कायरूपस्य तद्‌ग्राह्यत्वनिवर्त्तनम् ॥८॥

द्विविधास्संस्काराः । स्मृत्युत्पादनहेतवो वासनाख्याः । जात्यायुर्भोगहेतवोधर्म्माधर्म्माख्याः । तेषु संयमात् पूर्वासामतीतानां जातीनां जन्मनां परिज्ञानं साक्षात्कारो जायते जातीत्युपलक्षणं पूर्वदेश काल कुल कर्मणामपिसाक्षात्कारोजायते तत्राप्ययं विवेकः । वासनाख्यसंस्कारमात्रसंयमात् पूर्वजाति स्मरणमात्रम्भवति धर्म्माधर्म्माख्यसंस्कारसंयमात्तु जात्यायुर्भोगमात्रसाक्षात्कारः । उभयविधसंस्कारसयमात्तु, अमुष्मिन्देशेऽमुष्मिन् कुले विष्णुशर्म्माहं भूत्वाऽमुष्मिन् कालेऽदःकर्म्माकार्षमित्यादि सर्वं साक्षात्क्रियते धर्म्माधर्म्माख्यसंस्कार संयमाज्ज्ञाविजन्मापि साक्षात्क्रियते योगिनेत्यऽपि वेदनीयम् । केन चिन्मुखरागादिलिङ्गेन गृहीते प्रत्यये संयमतः परचित्तस्य ज्ञानमुत्पद्यते सरागं विरागंवेति । ननु मुखरागादिलिङ्गेन सरागं विरागं वा परचित्तमित्ययोग्यप्यध्यवसातुं क्षमते—तत्र कृत संयमस्य योगिनः को विशेष इति चेत् विशेषतः परचित्तविषयज्ञापकलिङ्गालाभेऽपि योगिनस्तज्ज्ञानसम्भव इति विशेषः ॥ ७ ॥ चित्तमात्रमेव योगी जानाति सरागं विरागंवेति नामुष्मिन्विषये सरागं विरागं वेति जानाति रागविरागालम्बनीभूतविषयस्य संयमेनाविषयीकृतत्वादित्याह—। नतदिति । सालम्बनं सविषयम् । तत्—चित्तम् । न जानाति । तस्य—आलम्बनस्याविषयत्वात्—योगिनः । संयमेनासाक्षात्कृत-

त्वात् । सविषयप्रत्ययसंयमे तु सालम्बनस्यापि परचित्तस्य ज्ञानं सम्भवति तदालम्बनस्य विषयीकृतत्वादिति भावः कायरूप-संयमसिद्धिमाह—। संयमादिति । कायरूपस्य संयमात्तद्रूपे या ग्राह्यत्वरूपा शक्तिस्तस्या निवर्त्तनं प्रतिबन्धोभवतीत्यर्थः ॥८॥ शक्तिप्रतिबन्धे सति फलमाह—। अन्तर्धानगतिरिति ।

**अन्तर्धानगतिश्चक्षुः प्रकाशायोगसम्भवात् ।**

**अपरान्तपरिज्ञानमायुर्विपाक संयमात् ॥९॥**

ग्राह्यत्वशक्तिमद्रूपवता साकं सात्त्विकचक्षुःप्रकाश संयोगस्य प्रत्यक्षजनकत्वेन योगिना कायरूपे संयमेन तस्या निवर्त्तितत्वा-दितिचक्षुःप्रकाशसंयोगासम्भवादन्तर्धानमुत्पद्यते योगिन इति भावः । एतेन शब्दाद्यन्तर्धानमप्युक्तं वेदितव्यं तद्यथा शब्दे संयमाद् धावतो योगिनःपादतलशब्दं पठतश्च पाठङ्करतालिकां वादयतश्च करतालिकां गायतश्च गानं न परः कश्चिच्छृणोति । रससंयमात्तु न योगिकायरसमास्वादयन्ति दंशमत्कुणादयः । गन्धसंयमात्तु न तत्कायं कश्चिज्जन्तुर्जिघ्रति । स्पर्शसंयमान्न तं कश्चित् स्पृशति । सिद्ध्यन्तरमाह—। अपरान्तेति । आयुर्विपाकं कर्म द्विविधं सोपक्रमं निरुपक्रमं च यत्फलजननाभिमुख्येन वर्त्तते तत्सोपक्रमं तद्विपरीतं च निरुपक्रमं तत्र संयमात् किं शीघ्रविपाकं किञ्चिरविपाकमितिधारणादिदाढ्यादपरान्तस्य शरी-रवियोगस्यामुष्मिन् देशे काले वा मम शरीर वियोगोभविष्य-तीति ज्ञानमुत्पद्यते संयमिनः ॥ ९ ॥ अपरान्तज्ञानस्य सर्व-साधारणमुपायान्तरं निर्दिशति—। अरिष्टेभ्य इति ।

**अरिष्टेभ्योऽथवेदेति मैत्र्यादिषु बलानि च ।**

**बलेष्वश्वबलादीनि जायन्ते तस्य संयमात् ॥१०**

पिहितकर्णस्य कोष्टगतवायुघोषाश्रवण—विकृतपुरुषदर्शन—स्वर्गादिदर्शन—कनकतरुदर्शन—सन्तप्तघृतादिषु मुखाद्यवयवादर्शनादोन्यरिष्टानि—एभ्यःशरीरवियोगं सर्वो जानाति। तत्र योग्ययोगिनोरयंभेदः। योगो निश्चियेनायोगो तु संशयेन जानाति। मैत्रीकरुणामुदितासु संयमात्‌सिद्धिमाह—। मैत्र्यादिष्विति। मैत्र्यां संयमात्सर्वाण्यस्य सर्वेषां चायं मित्रत्वे प्रतिपद्यते—एवं करुणादिष्वपि वेदितव्यम्। यत्र क्वचिद्धस्तिबले वायुवेगे सिंह वोर्य्येऽश्वबले वाऽऽत्मोयत्वं भावयतोऽस्य संयमिनस्तदुगत्तत्त्व माविर्भवतीत्याह—। बलेष्विति। अश्वबले संयमादश्वबलोभवति हस्तिबले संयमाद्धस्तिबलो भवति सिंहवीर्य्ये संयमात्सिंहवीर्य्योभवति वायुवेगे संयमाद्वायुवेगो भवतीत्यादि ॥ १० ॥ ज्योतिष्मती या मनसः प्रवृत्तिरुक्ता तस्या य आलोकस्तस्य सूक्ष्मव्यवहितविप्रकृष्टेष्वर्थेषु विन्यासात्तंतमर्थमधिगच्छतीत्याह—। प्रवृत्तीति।

प्रवृत्त्यालोकविन्यासात् सूक्ष्माद्यर्थपरिग्रहः।
भुवनावगमस् सूर्य्ये संयमाच्चन्द्रसंयमे ॥११॥
तारावूहपरिज्ञानं ध्रुवे तद्‌गति दर्शनम्।
कायव्यूहं विजानाति कृत्वा नाभौ तु संयमम् ॥१२

सूर्य्ये यस्संयमंकरोति तस्य भूर्भुवादि सप्तभुवनज्ञानमुत्पद्यत इत्याह—भुवनेति। चन्द्रे संयमे कृते सति ताराणां सन्निवेशस्य ज्ञानमुत्पद्यत इत्याह—चन्द्रेति। ज्योतिः प्रधाने निश्चले ध्रुवे कृतसंयमस्य ताराणां गत्यादिज्ञानमियंतारा—अयंग्रहस्त्वेयता-कालेन गच्छतीत्येवंरूपमुत्पद्यत इत्याह—। ध्रुव इति। बाह्यसिद्धोः प्रदर्श्य सम्प्रत्याभ्यन्तरसिद्धोः प्रदर्शयितुमुपक्रमते—।

कायेति। नाभौ—षोड़शारे नाभिचक्रे संयमं कृत्वा योगी काये योव्यूहो विशिष्टरसनाड्याद्यवस्थानं तं विजानाति साक्षात् करोतीत्यर्थः ॥११॥१२॥ जिव्हाया अधस्तात्तन्तुस्ततोऽधस्तात् कण्ठस्ततोऽधस्तात् कूपस्तत्र संयमाद्योगिनः क्षुत्पिपासे न बाधेते-इत्याह—। संयमादिति। कण्ठतोऽधस्ताद्गर्त्ताकार-प्रदेशोयस्तत् स्पर्शात्प्राणादीनां क्षुत्पिपासे बाधेते तस्मिन् कृतसंय-मस्य क्षुद्धेतुकस्पर्शाभावात् क्षुत्पिपासे निवर्त्तेते इति भावः॥ कण्ठ-कूपस्याधस्तादुरसि कूर्म्माकारा कूर्म्माख्यानाड़ी तस्यां कृतसंय-मस्य चेतः स्थिरपदं लभते-इत्याह—। स्थिरत्वमिति।

**संयमात्कण्ठकूपे तु निवृत्तिः क्षुत्पिपासयोः।**
**स्थिरत्वं कूर्म्मनाड्यां च ज्योतिषि सिद्ध दर्शनम् १३**

शिरःकपाले ब्रह्म रन्ध्राख्यमन्तःछिद्रं प्रकाशत्वाज्ज्योतिरभिधीयते तत्र ज्योतिषि कृतसंयमस्य सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनम्भवतीत्याह—। ज्योतिषीति ॥१३॥ सर्वज्ञानोपायमाह—। सकलमिति।

**सकलं प्रातिभाद्वेत्ति हृदये चित्तवेदनम्।**
**पुरुषविषया प्रज्ञा पौरुष बोधसंयमात् ॥१४॥**

प्रागुत्पद्यमानं यथार्थज्ञानं प्रतिभा-तस्यां संयमे क्रियमाणे यत्संयमान्तरानपेक्षं विवेकजज्ञानस्य पूर्वरूपं तारकं ज्ञानमुदेति तत्प्रातिभमुच्यते तस्माद्योगी सकलं सर्वं वेत्ति जानातीत्यर्थः यथोदेष्यतस्सवितुः प्राक् तत्प्रभयैव निखिलपदार्थप्रकाश एवमुत्-पत्स्यमानविवेकजज्ञानात्प्राक् तारकेण प्रातिभेनैव सकलविषय-प्रकाश इति हृदयम्॥ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म तद्धृदयं तत्कृतसंयमः परचित्तगतं सर्वं जानातीत्याह—।

हृदय इति। पुरुषज्ञानमाह—पुरुषेति। पौरुषस्वरूपमात्रा-वलम्बनोयोबोधः परित्यक्ताहङ्कारे चित्तसत्त्वे चिच्छायासङ्क्रमस्तत्र संयमात् पुरुषविषया प्रज्ञा पुरुषज्ञानमुत्पद्यते ॥ १४ ॥ पौरुषेय-बोधसंयमोत्पन्नोक्तज्ञानफलमाह—। तत इति। ततः पुरुष-विषयायाःप्रज्ञायाः।

ततः प्रातिभमादर्शः श्रावणं वेदना तथा।
वार्त्ताऽऽस्वादश्च जायन्ते दिव्यज्ञानानि योगिनः १५

प्रातिभंपूर्वोक्तं ज्ञानम्। आदर्शश्चाक्षुषं ज्ञानम्। श्रावणं श्रोत्रजं ज्ञानम्। वेदना-स्पार्शनं ज्ञानम्। वार्त्ता घ्राणजं ज्ञानम्। आस्वादो रासनं ज्ञानम्। ननु सर्वस्यैवैताद्दृशानि ज्ञानानि जायन्ते तेषु पुरुषज्ञानस्य क उपयोगइत्याह—। दिव्येति। आदर्शस्य दिव्यरूपं विषयः। श्रावणस्य दिव्यो गन्धः। आस्वादस्य दिव्यो-रसः ॥ १५ ॥ प्रातिभादयः पूर्वोक्ताः फलविशेषास्समाहितचित्त-स्योत्पद्यमानास्समाधावुपद्रवा भवन्ति व्युत्थाने च सिद्धय इत्याह—। समाधाविति।

समाधावुपसर्गास्ते व्युत्थाने सिद्धयोमताः।
बन्धकारणशैथिल्यात् प्रचारावगमादपि ॥१६॥
चित्तस्य निक्षेपेद्योगी चित्तं देहान्तरेषु च।
असङ्गो जलपङ्कादावुदानमरुतोजयात् ॥१७॥

पुरुषज्ञानस्य कायप्रवेशरूपं फलान्तरं दर्शयति—। बन्धेति। व्यापिनोरात्मचित्तयोः कर्म्मविशेषेण यच्छरीरान्तर्वेदनं स बन्ध-स्तस्य कारणं योधर्म्माधर्म्मरूपः कर्म्माशयस्तस्ययदा निरुक्तपुरुष-ज्ञानाच्छैथिल्यम्भवति तदा चिरं वाह्यस्वरति वहिश्चरतस्तस्य यः

प्रचारः—हृदयाद्विषयाभिमुख्येन गमनं तस्यावगमादनेन प्रकारेण चित्तं बहिश्चरतीति ज्ञानात्। चित्तवहनाड्यादिकं यो योगो जानीयात्स चित्तं देहान्तरेषु परशरीरेषु निक्षिपेदावेशयेत् —निक्षिप्ते च चेतसि मधुकरराजमनुमक्षिका इव तदन्विन्द्रियाण्याविशन्ति तथा च सजीवं मृतंवा शरीरमाविश्य सर्वत्राभिविहरति। प्राणापान समानव्यानोदान समानाः पंच प्राणवायवः। हृदयान्मुखनासिकाग्रेण प्रणयनात्प्राण उच्यते नाभिप्रदेशात्पादाङ्गुष्ठपर्य्यन्तमपनयनादपान उच्यते व्याप्य नयनात् सर्वशरीरव्यापी व्यान उच्यते कृकाटिकादेशादाशिरो वृत्तेरूर्द्ध्वं नयनादुदान उच्यते नाभिं संवेष्ट्य समन्तान्नयनात् समान उच्यते तत्रोदानस्य संयमद्वारेण जयादितरेषां निरोधाच्च जल पंक कंटकादिषु न सज्जत इत्याह—। असङ्ग इति। जले नद्यादौ। पंके कर्दमे। आदिना कण्टकादिपरिग्रहः। तेषु गच्छतोप्यस्यैषां स्पर्शो न भवति ॥१६॥१७॥ उदानजयस्य फलान्तरमाह—। उत्क्रान्तिरिति।

उत्क्रान्तिश्च भवेज्ज्वालस्समानमरुतोजयात्।
सम्बन्धसंयमाद्दिव्यं श्रोत्रमाकाशशब्दयोः ॥१८॥

सम्बन्धसंयमात् कायाकाशयोर्लघुमतस्वपि।
समापत्तेश्च सिद्धस्य गतिराकाशमण्डले ॥१९॥

उदानजयेनातिलघुत्वाज्जलादौ मग्नोपि तूलपिण्डवदूर्द्ध्वमागच्छति न तत्र निमज्जतीत्युत्क्रान्तिशब्दार्थः। समानजयसिद्धिमाह—। ज्वाल इति। समानस्य मरुतोवायोः प्राणस्य संयमद्वारेण जयाद्वशीकरणात्। ज्वालोज्वलनम्भवति। अग्नेस्तेजसा ज्वलन्निव योगो प्रकाशते कदाचित्तेन तेजसा शरीरमपि दहति

यथा सतो भवपत्नी पितृपराधकुपिता स्वेन तेजसा शरीरं ददाहेति पुराणप्रसिद्धिः। श्रोत्रदिव्यत्वोपायमाह—। सम्बन्धेति। आकाशश्रोत्रयोर्देशदेशिभावरूपसम्बधस्य संयमाद् दिव्यं दिव्यशक्तिमच्छ्रोत्रं श्रवणेन्द्रियं भवति येन युगपत् सूक्ष्मव्यवहितविप्रकृष्टशब्दान्—शृणोति ॥ १८ ॥ कायाकाशसम्बन्धसंयमाल्लघुतूलसमापत्तेश्च लघुत्वाज्जले पादाभ्यां विहरति ततस्तूर्णं तन्तुजालेन संचरमाण आदित्यरश्मीनालम्ब्य यथेष्टमाकाशेन गच्छतीत्याह—। सबन्धेति। लध्विति भाव प्रधानो निर्देशः। लघुत्ववत्सु तूलादिष्वित्यर्थः ॥ १९ ॥ शरीर निरपेक्षा वहिर्मनसोवृत्तिर्महाविदेहाऽ कल्पिता। शरीरसापेक्षा मनसो वृत्तिर्विदेहा कल्पिता। कल्पितयाऽ कल्पितां महाविदेहां प्रसाध्य परकायेऽपि प्रवेष्टुमोष्टेतयैवाकल्पितया महाविदेहया योगिनस्साात्त्विकप्रकाशावरणरूप क्लेशादिक्षयोभवतीत्याह—। वहिरिति।

वहिरकल्पिता वृत्तिर्विदेहा महती ततः।
योगिनोयतचित्तस्य प्रकाशावरणक्षयः ॥२०॥

वहिरित्यतः प्राक् मनस इति पूरणीयम् ॥ २० ॥ पञ्चभूतानां स्थूलत्वादिषु पञ्चसु धर्मेषु संयमाद् भूतजयोभवतीत्याह—। स्थूलेति।

स्थूलस्वरूपसूक्ष्मान्वय्यर्थवत्त्वेषु संयमात्।
भूतजयस्ततोऽणिमादिप्रादुर्भावोऽस्य जायते ॥२१॥

स्थूलं भूतानां दृश्यमानं विशिष्टरूपं, स्वरूपं गन्धस्नेहोष्णता प्रेरणावकाशदान लक्षणं कार्य्यं, सूक्ष्मं तन्मात्राणि। अन्वयिनस्सर्वत्र कारणतयाऽनुगता गुणाः। अर्थवत्त्वं गुणेषु भोगापवर्गसम्पादन शक्तिः। एषु पञ्चरूपेषु संयमाद् भूतजयो-

भवति॥ भूतजयफलमाह—। तत इति। आदिना लघिम महिम गरिम प्राप्ति प्राकाम्येशित्व वशित्वानि गृह्यन्ते। तत्रा णिमा-अणुभावोयेन शिलामपि प्रविशति लघिमा-लघुभावोयत-स्सूर्य्यमरीचीनालम्ब्य सूर्यलोकं गच्छति। महिमा-महतोभावो-यतो महान् भवति गरिमा-गुरोर्भावोगुरुत्वं यतोभवति यस्मिन् सति न तं कश्चिच्चालयितुं चमते। प्राप्तिः-स्थितस्यापीष्टदेशेनाव-यवसम्बन्धोयतश्चन्द्रमसमङ्गुल्यग्रेण स्पृशति। प्राकाम्यम्—इच्छा-नभिघातः। ईशित्वम्—भूतभौतिकानां स्थितिमोष्टे। वशित्वम्। भूतभौतिकान्यस्य वशे गच्छन्ति॥ २१॥ भूतजयस्य फला-न्तरमाह—। तद्धर्मेति। तदा बुद्धिस्थयोगिकायपरामर्शः। तस्य योगिकायस्य ये धर्म्मारूपादयस्तेषामनभिघातोऽनाशो भवति नास्य कायरूपादेर्वाय्वादिना शोषादिकं भवति चकारः फलान्त-रसूचकः। ततोऽपि च तद्धर्म्मानभिघातादपि च कायसम्पदुत्-पद्यते। का कायसम्पदितिस्वरूपाकांक्षायामाह—। कायेति।

तद्धर्म्मानभिघातश्च कायसम्पत्तोऽपि च।

कायसम्पद्बलं रूपलावण्यं वज्रसंहतिः॥२२॥

यदाऽस्य कायरूपादेर्वह्निवाय्वादिना दाहशोषादिकं न भवति दर्शनीयोऽतिशयबलोवज्रसंहननश्च तदा भवतीति भावः। यद्वा तद्धर्म्मेत्यत्र पूर्वोक्तपञ्चभूतानां तदा परामर्शस्त-थाचायमर्थः। तेषां पृथिव्यादिपञ्चभूतानां ये धर्म्मामूर्त्त्यादयस्ते-रनभिघातोऽ निरोधोयोगिकायस्य भवति नास्य कायक्रियां पृथिवी मूर्त्त्या रुणद्धि यतो भूतलस्याधस्तात्तलादिकमपि गन्तुं समर्थो भवति नास्य कायं स्निग्धा आपः क्लेदयन्ति यतोवर्षसह-स्रान्तमपि जलेऽवतिष्ठते नास्य कायं वह्निर्दहति यतो वह्नि मध्येऽपि विहरति नास्य कायं वायुश्शोषयितुमुत्पातयितुं वेष्टे

यतोनिष्कम्पोऽश्मप्रवद्दनाद्यङ्गस्थिरं गरिवनादौ निदाघेऽप्यभयं समास्ते नास्य कायं गगनमनावर्त्तुं शक्नोति यतोऽनावरणात्मकेऽप्याकाशे भवत्यावृत्तकायस्सिद्धानामप्यदृश्यो भवतीति भूतधर्म्मानभिघातः॥ ततोऽपि चेत्यत्रापि च योरवधारणार्थत्वाङ्गीकारेण तत इत्यनेन च निरुक्ता भूतपञ्चकस्वीकारात् भूतजयादेवेत्यर्थो-लभ्यते॥ २२॥ इन्द्रियजयोपायमाह—। संयमादिति। स्वरूपा-स्मितान्वय्यर्थवत्त्वान्यादिपदार्थाः।

संयमाद्ग्रहणादीनामिन्द्रियविजयो भवेत्।
ततो मधुप्रतीकाःस्युर्विवेकख्यातिमात्रतः ॥२३॥
अधिष्ठा सर्वभावानां सर्वज्ञातृत्वमेव च।
वैराग्यादपि कैवल्यं दोषबीजपरिक्षये ॥२४॥

ग्रहणम्-इन्द्रियाणां विषयाभिमुखी वृत्तिः। स्वरूपम्-सामान्येन प्रकाशः। अस्मिता—अहङ्कारानुगमः। अन्वय्यर्थवत्त्वे-पूर्वोक्ते। इन्द्रियजयफलमाह—। तत इति। तत इन्द्रियजयात्। मधुप्रतीकास्तिस्रस्सिद्धयो भवन्ति। मनोजवित्वं विकरणभावः प्रधान जयश्च मधुप्रतीकाः शरीरस्य मनोवद्गतिलाभो मनोजवित्वम्। कायनिरपेक्षाणामिन्द्रियाणां वृत्तिलाभो-विकरणभावः। सर्ववशित्वं प्रधानजयः। इदानीं सपादार्द्धकेनान्तःकरणजयमाह—। अन्तःकरणे कृतसंयमस्य यत् सत्त्वपुरुषान्यताख्यातिमात्ररूपं विवेकख्यातिमात्रं तस्मात् सर्वभावानामधिष्ठाऽधिष्ठानमधिष्टातृत्वम्। सर्वज्ञातृत्वं च भवति—इयं विशोकानाम सिद्धिरप्युच्यते यां प्राप्य योगी सर्वज्ञो-मुक्तबन्धनोयथेष्टमापद्यते। एतस्यां विशोकायां सिद्धावपि यदा-वैराग्यं जायते तदा सर्वदोषबीजाविद्यानाशे-आत्यन्तिको दुःख-निवृत्तिस्सम्पद्यते इत्याह—वैराग्यादिति॥२३॥२४॥

चत्वारः खल्वमी योगिनः प्रथमकल्पिकः १ मधुभूमिकः २ प्रज्ञाज्योतिः ३ अतिक्रान्तभावनीयः ४ तत्र प्रथमोऽभ्यासोप्रवृत्तमात्रज्योतिः । नत्वनेन परचित्तादिगोचरज्ञानरूपं ज्योतिर्वशीकृतम् । ऋतम्भरप्रज्ञोद्वितीयोनिरुक्तमधुप्रतीकसिद्धिमान् । भूतेन्द्रियजयो तृतीयः । कृतकर्त्तव्यसाधनायस्य सप्तधा प्रान्तभूमिः प्रज्ञोक्ता स चतुर्थः । तत्र प्रथमस्य स्थानस्वामिनोदेवा नोपनिमन्त्रयितारोभवन्ति भो दिव्यान् भोगान् भुङ्क्ष्वेति । यतस्तोऽभ्यासमात्र एव प्रवृत्तोऽ सम्पादित दिव्यसुखभोगसाधनः । नापि द्वितीयस्योपनिमन्त्रयितारोदेवा यतस्तोऽभ्यासं कृत्वाभूतेन्द्रियमात्रजय्यसम्पादितसकलसाधनः चतुर्थश्च नोपनिमन्त्रयतामपि देवानामुपनिमन्त्रणं शृणुते तुच्छीकृत्य देवतदीयभोगान् सम्पादितानुत्तमसुखसाधन इति मधुमतीं भूमिं साक्षात्कुर्वंतस्तृतीयस्य योगिनोदेवा उपनिमन्त्रयितारो भवन्तीति स्थान्युपनिमन्त्रणे नानेन तृतीययोगिना संगस्मयौ कर्त्तव्यो यतस्संगस्मयकरणे समाध्युत्सन्नोत्साहः पुनर्घोरसंसाराङ्गारेषु पापच्यत इति तृतीययोगिनम्प्रत्याह—। स्थानीति ।

स्थानिनिमंत्रणे सङ्गाभिमत्यकरणं पुनः ।

अनिष्टात्तद्विवेकोत्थं ज्ञानं क्षणक्रमे यमे ॥२५॥

सङ्गोविषयाभिलाषः । अभिमतिरभिमानः—स्मयः—अहं सर्वप्रार्थनोय इति ज्ञानम् ॥ वक्ष्यमाणभेदप्रतिपत्तिहेतुज्ञानस्वरूपमाह—। तदिति । क्षणानां यः क्रमः पौर्वापर्य्येण परिणामः । तत्र संयमाद्यज्ज्ञानमुत्पद्यते तद् विवेकोत्थं विवेकजं ज्ञानमुच्यते ॥ २५ ॥ तस्य फलं दर्शयितुमाह—। अन्यतयेति ।

अन्यत्वेनानवच्छेदाद्देशलक्षणजातिभिः ।

तुल्ययोस्तु ततो ज्ञानं सर्वं विषयमक्रमम् ॥२६

सर्वथा विषयं ज्ञानं तारकं च विवेकजम् ।
सत्त्वपुरुषयोश् शुद्धिसाम्ये कैवल्यमीरितम् ॥२७

इतियोगमकरन्दे तृतीयो विभूतिपादः ॥

अन्यत्वेन भिन्नत्वेन । अनवच्छेदात्—अग्रहात् । पदार्थानां भेदहेतवोजाति लक्षण देशा भवन्ति जात्या भेदो यथाऽयंकरटोऽयं सरटः । जात्या तुल्ययोर्लक्षणेन भेदो यथाऽयंगोःशुक्लोऽयंरक्तः । जातिलक्षणाभ्यां तुल्यपरिमाणयोर्द्वयोरामलकयोरयं पूर्वभागस्थोऽयंपृष्ठभागस्थ इति यदा जातिलक्षणदेशेभ्यस्तुल्ययोरुभयोर्भेदप्रतिपत्तिर्न जायते तदा तुल्ययोर्ज्ञानं ततो विवेकजात् क्षणक्रमसंयमोत्थाज्ज्ञानाद् भवति तदेव वर्द्धमानं सर्वविषयं सर्वथा युगपदवगाहमानं सत्त्वपुरुषयोः शुद्धिसाम्येन कैवल्यहेतु भवतीत्याह—। सर्वविषयमिति । सर्वाणि महदादीनि विषया यस्येति सर्वविषयं भाव्यपि विद्यमानत्वेन युगपच्च विषयीकरोत्यतोऽक्रमम् । अतीतादिसर्वविषयत्वात्सर्वैं रूपादिधर्म्मैर्विषयावगाहनाच्च सर्वथाविषयमुच्यते संसारार्णवतारणादिदमेवतारकम् । सत्त्वशुद्धिः सत्त्वां विवेकख्यातौ बुद्धितत्त्वस्य कार्य्याजननम् । पुरुष शुद्धिर्वृत्तिसारूप्यनिवृत्तिः । बुद्धितत्त्वस्य कर्तृत्वादि निवृत्त्या कारणे लये सति पुरुषस्योपचरितभोगनिवृत्त्याऽऽत्यन्तिको दुःखनिवृत्तिः कैवल्यं मोक्षः ॥२६॥२७॥

इति श्रीयोगमञ्जर्य्यां योगमकरन्दव्याख्यानरूपायां कुलयशस्विशास्त्रिप्रणीतायां तृतीयो विभूतिपादः ।

---

सम्प्रति कैवल्याख्यं चतुर्थंपादमारभमाणस्तत्रादौ सिद्धीनामनेकजत्वं सूचयति—। जन्मौषधीति ।

जन्मौषधितपोमन्त्रसमाध्युत्पन्नसिद्धयः ।

पूरणात्प्रकृतीनान्तु परिणामोऽन्यजन्मनः ॥१॥

जन्मसिद्धिर्यथा कपिलस्य । स्मरन्ति हि सांख्यप्रवर्त्तकः-कपिलो महर्षिस्सर्गादौ ज्ञानवैराग्यैश्वर्य्यसम्पन्नः प्रादुर्बभूवेति । औषधिसिद्धिर्वनस्थौषधीन् गृहीत्वा तैरोगापनयनसामर्थ्यम् । रसायनादिनिर्माणसामर्थ्यं वा । तपस्सिद्धिः प्राचेतसविश्वामित्र प्रभृतीनां महर्षीणाम् । मन्त्रसिद्धिः—मन्त्रप्रभावादाकाशादि-गमनम् । समाधिजाश्च सिद्धयः प्राक् प्रतिपादिताः । योह्यस्मि-ञ्जन्मनि जात्यन्तरपरिणामस्स प्रकृतीनामापूराद् भवतीत्यर्थं स्पष्टयति—। पूरणादिति । पाश्चात्यजन्मप्रकृतयोऽस्मिञ्जन्मनि विकारानापूरयन्तीति भावः । प्रकृतयश्च कायेन्द्रियपरिणामहेत-वोगुणविशेषाः ॥१॥ ननु धर्म्माधर्म्मादिनिमित्तमपेक्षमाणाः प्रकृ-तयोविकारानापूर्य्य जात्यन्तरेण परिणमन्त इत्यत आह—। क्षेत्रिकवदिति ।

क्षेत्रिकवत्ततोभेदः प्रकृत्यावरणस्य तु ।

जायते नहि धर्म्मादि निमित्तं तत्प्रयोजकम् ॥२॥

यथा कृषीवलः केदारात् केदारान्तरे जलं पिप्लावयिषुर्जलगति-प्रतिबन्धकावरणभेदमात्रं करोति तद्वत् । ततोऽनुष्ठीयमानधर्म्मादेः । प्रकृतीनामपूर्वेण कायेन्द्रियरूपेण परिणामोन्मुखानां गुणविशे षाणाम् । आवरणमावरकमधर्म्मादि तस्यैव विरोधित्वाद् भेदः क्षयोजायते । नहि धर्म्मादि तासां प्रकृतीनां परिणामे प्रयोजक-न्निमित्तम्भवति । यथा कृषीवलभिन्नावरणानि सलिलानि स्वय-मेव केदारात् केदारान्तरमागत्यापूरयन्ति केदारं, तद्वद्धर्म्मादिनि मित्तप्रतिहतावरकाः प्रकृतयस्स्वयंविकारानापूरयन्ति नतु विकारजनने धर्म्मादिनिमित्तमपेक्षन्ते नहि कार्य्येण कारणं

विकारजनने प्रवर्त्तंते कारणस्यावरणभेदमात्रं तु कार्य्येणापि कर्त्तुं शक्यत इत्यावरणभेदमात्रं धर्म्मादिनिमित्ताद् भवतीति-भावः ॥ २ ॥ ननु योगाङ्गानुष्ठानोत्पन्नानेककायनिर्म्माणशक्ति-र्योगी यदाऽनेक शरीराणि युगपत् सृजति तदा किमेकमनस्कानि तानि सृजति वाऽनेकमनस्कानीत्यत आह—। निर्मिमीत इति।

**निर्मिमीतेऽन्यचित्तानि सोऽस्मितामात्र चित्ततः ।**

**वृत्तिभेदे त्वनेकेषां चित्तमेकं प्रयोजकम् ॥ ३ ॥**

योगी स्वनिर्मितेषु कायेषु यानि-अन्यानि भिन्नानि चित्तानि तानि—अस्मितामात्रचित्ततः। अस्मितामात्रचित्तं मूल कारण-मुपादाय निर्म्मिमीते सृजति—अनेकेषां भिन्नानां निर्म्माणचि-त्तानां वृत्तीनां प्रवृत्तीनां व्यापाराणां भेदे नानात्वे तु—एकं योगिनश्चित्तं प्रयोजकमधिष्ठातृत्वेन प्रेरकम्भवति। प्रेरकचित्त-भिन्नत्वे तु स्वनिर्मितकायेषु निर्म्माणचित्तगतवृत्तिभेदं न जानी-यादित्यग्नेर्विस्फुलिङ्गा इव योगिचित्तान्निर्माणचित्तानि निस्सर-न्तीति भावः ॥ ३ ॥ जन्मौषधिमन्त्रतपस्समाधिजभेदात्पञ्चविधं निर्म्माणचित्तं तत्र चतुर्थ्यंस्समाधिजचित्तस्य वैलक्षण्यमाह—। तत्रेति।

**तत्र ध्यानसमुत्पन्नमनाशयं मनोमतम् ।**

**परेषां त्रिविधं कर्म्माशुक्लाकृष्णान्तु योगिनः ॥४॥**

तत्र जन्मजादिपञ्चचित्तेषु, ध्यानसमुत्थं समाधिजं, यन्मन-श्चित्तं तदनाशयं वासनाशून्यं मतमभिमतं स्वोक्तमित्यर्थः। ननु परेषामिव योगिनोऽपि कर्म्माशयवलात् सुखदुःखाभिसम्बन्धस्स्या-दित्यत आह—। परेषामिति। परेषामितरेषामयोगिनां कर्म त्रिविधं त्रिप्रकारं शुक्लं कृष्णं शुक्लकृष्णञ्चेति योगिनस्तु अशुक्ला-कृष्णं कर्म तत्र शुभफलदं कर्म स्वाध्यायादि शुक्लम्। अशुभफलं

कर्म ब्रह्महत्यादि कृष्णम् । दुःखोपसर्जन सुखफलकं यागादि कर्म शुक्लकृष्णम् । संलेलिह्यन्ते हि स्वर्गमधुमधुररसावलेहिनो यागाद्यनुष्ठायिनः कुशलास्तदङ्ग हिंसादि जनित पापमात्रोपपादितां दुःखकटुकौषधिकटुताम् । योगिनस्त्वशुक्लाकृष्णं कर्म यस्मात् क्रियमाणमपि तत् फलत्यागानुसन्धानेनानुष्ठितत्वान्न किञ्चित्फलमारभते । नेतरेषामिव क्षीणक्लेशस्य योगिनः कर्म्माशयबलात्सुखदुःखाभिसम्बन्ध इत्याशयः ॥४॥ विपाकानुगुणवासनाजनकत्रिविधकर्मासम्बद्धत्वेन योगिनोजन्मान्तराभावात् त्रिविधकर्मसम्बद्धानामितरेषां त्रिविधकर्मजन्या विपाकानुरूपा देशकालाद्यच्छिन्नाःशुक्लाः कृष्णाः शुक्लकृष्णाश्च वासना अभिव्यक्ता भवन्तीत्याह—। त्रिविधादिति ।

त्रिविधात्तद्विपाकानुगुणानामेव जायते ।
वासनानामभिव्यक्ति र्देशकालादि जातिभिः ॥५॥

त्रिविधात् त्रिप्रकारात्कर्म्मणः । तस्य कर्म्मणोयोविपाकः फलं देवमनुष्यतिर्य्यग्जात्यादि तस्य या अनुगुणा अनुरूपा वासनास्तासां देशकालकुलजातिभिरभिव्यक्तिर्भवतीत्यर्थः । भावस्त्वयं येन कर्मणा यादृक् शरीरमारब्धं देवतिर्य्यङ्मनुष्यादि तत्तच्छरीरानुसारेण तास्ता वासनाः प्रादुर्भवन्ति तत्तज्जाति देशकालादीनवलम्बमानाः ॥ ५ ॥ ननु जाति देशकाल व्यवहितानां वासनानां स्वविपाकानुरूपस्मृत्याद्युत्पादने आनन्तर्य्यंन सम्भवति देशादिव्यवधायकत्वादिति तासांनिष्फलत्वं सम्प्राप्तमित्यत आह। पारम्पर्य्यमिति ।

पारम्पर्यं विप्रकृष्टानां स्मृति वासनयोरपि ।
ऐक्यरूप्यादनादित्वं तासां नित्यतयाऽऽशिषः ॥६

पारम्पर्य्यम्—आनन्तर्य्यम् । विप्रकृष्टानां देशकालजातिव्यव-

ह्वितानामपि वासनानाम्। तत्र हेतुमाह—। स्मृतीति। स्मरण संस्कारयोस्समानविषयत्वादिति हेतुः। स्मृतिहेतुवासनानामनादित्वं निर्दिशति—। अनादित्वमिति। आशिषः—मम शरीरेन्द्रियादिभिर्वियोगोमाभूत् सुखसाधनं मे सदा भूयादित्येवं रूपस्य सङ्कल्पस्य नित्यतया नित्यत्वेन तत्कार्य्याणां तासां स्मृतिहेतुवासनानामनादित्वम् ॥ ६ ॥ वासनानां हानोपायमाह—। हेत्विति।

हेतुफलाश्रयालम्बसंगृहीतास्तु वासनाः।
प्रवर्त्तन्तेऽप्ययेऽमीषामपीतिस्तन्निरूपिता ॥७॥

त्रिविधकर्मजन्यानां वासनानां हेतुस्त्रिविधं कर्म। फलम्—जात्यादि कम्। यज्जात्यादिकं जनयन्ति तदेव तासां फलम्। आश्रयः—साधिकारंचित्तम्। यद् यद्वस्तु यां यां वासनां व्यनक्ति तत्त देव तस्यास्तस्या आलम्बः। एभिर्हेत्वादिचतुर्भिर्गृहीताः कर्मजन्यावासनाः प्रवर्त्तन्ते। संस्काररूपाणां वासनानान्तु हेतुरनुभवस्तस्य च रागादयस्तेषामविद्येतिपारम्पर्य्येण साक्षाद्वा हेतुरविद्या। फलं स्मृतिः। आश्रयोवासनानां बुद्धितत्त्वम्। य एवानुभवस्य विषयस्स एव वासनानामालम्बः। एभिर्हेत्वादिचतुर्भिश्च संगृहीताः संस्काररूपा वासनाःप्रवर्त्तन्ते—अमीषां हेत्वादिचतुर्णामप्यये विनाशे सत्यासां वासनानामपीतिर्विनाशस्तन्निरूपितः कथितः ॥७॥ ननु सतामभावासम्भवादसतां चोत्पत्त्यसम्भवात्कथं वासनानामपीतिरुच्यत इत्यत आह—अस्तीति।

अस्ति स्वरूपतोऽतीतं भविष्यच्चाध्वभेदतः।
धर्म्माणां ते गुणात्मानोव्यक्तास्सूक्ष्माश्च भेदतः ॥८

धर्मैर्विपरिणममानश्चित्तरूपो धर्मीऽऽपवर्गमेकरूपो धर्म्मा-

स्वनेके भवन्त्याविर्भवन्तस्तिरोभवन्तश्च तस्माद्धर्म्माणामतीताना-गतभेदतस्तद्रूपेणावस्थानान्नासत्त्वं वासनानामतीतभावेनावस्था-नाच्च न फलजनकत्वमपीति भावः । अक्षरार्थस्तु धर्म्माणां वासनादीनाम् । अध्वभेदतः—अतीतानागतावस्थाभेदात् । अतीतं कृतव्यापारं भविष्यच्च करिष्यमाणव्यापारं स्वरूपतस्तद्रूपेण—अस्ति विद्यते । तेऽध्वानोगुणात्मानोगुणविशेषात्मकाः । व्यक्ता वर्त्तमानधर्मतामापन्नाः सूक्ष्माश्चातीतानागतभावमापन्नाः । भेदतः—व्यक्तत्वाव्यक्तत्वधर्म्माभ्यां भिन्नत्वात् ॥ ८ ॥ धर्म्यैकत्व-माह—। एकत्वादिति ।

एकत्वात्परिणामस्य वस्तुतत्त्वमितिस्थितम् ।
साम्येऽपि वस्तुनश्चित्तभेदाद्विभक्तता तयोः ॥९॥

प्रकाशक्रियास्थिति शीलानामनेकत्वेप्यङ्गिरूपचित्तपरिणामै-कत्वाद्वस्तुतत्त्वं चित्ततत्त्वमेकमितिस्थितम् । अयम्भावोयद्यपि गुणास्त्रयस्तथापि तेष्वेकस्याङ्गि भावेनावस्थानाच्चित्ततत्त्वमेकमेव तथाहि यदासत्त्वं रजस्तमसी अभिभूय शान्तामात्मनोवृत्तिं लभते तदा रजस्तमसी—अङ्गे सत्त्वात्मकं चित्ततत्त्वमङ्गिरकम् । एवं रजःसत्त्वतमसी—अभिभूय यदा घोरामात्मनोवृत्तिं लभते तदासत्त्वतमसी—अङ्गे रज आत्मकश्चित्ततत्त्वमङ्गिरकम् । एवं तमस्सत्त्वरजसी—अभिभूय यदा मूढामात्मनोवृत्तिं लभते तदा सत्वरजसी—अङ्गे तम आत्मकश्चित्ततत्त्वमङ्गिरकमित्येकश्चित्तं-धर्मि । ननु ज्ञान विषययोरेकत्वेन कथमेतदित्याह—साम्येऽ-पीति । वस्तुनोविषयस्य साम्येऽपि—एकत्वेऽपि । चित्तानां भेदान्नानात्वात् । तयोर्ज्ञान विषययोर्विभक्तता भेद इतरथा विषयाणां ज्ञानस्वरूपत्वे पुरुष विविधज्ञानभास्यत्वं पुरुषान्तरेण गृहीतस्य पुरुषान्तरग्राह्यत्वं चैकस्य विषयस्यानुपपन्नं स्यादेक

ज्ञाननाशेन नष्टत्वात् परबुद्धेरप्रत्यक्षत्वाच्चेति ज्ञानवाह्या विष
याः ॥९॥ ज्ञानातिरेके हेत्वन्तरमाह—। न चेति ॥

नचैक चित्त तन्त्रं हि वस्तु तदप्रमाणिकम् ।
परिणामि भवेच्चित्तं ज्ञाताज्ञातस्वरूपतः ॥१०॥

वस्तु विषयो नैकचित्त तन्त्रं भवितु मर्हति—एकचित्त तन्त्रं चेद्वस्तु स्यात्तदा तदप्रामाणिकं स्याच्चित्ताभावेऽपि वस्तु प्रत्यभिज्ञानस्याबाधितस्य सत्त्वेनेति नानुभूयमानवस्तुबाधसम्भवः। ननु चित्तं युगपत्सर्वंवस्तुस्वरूपावगाहित्वेनापरिणामि भवेदित्यत आह। परिणामीति। विषयस्य ज्ञाताज्ञातस्वरूपत्वं चित्तस्य परिणामितामवगमयतीत्यतश्चित्तं न युगपत्सर्वार्थमवगाहते वस्तूपरागापेक्षित्वाच्च चित्तस्येति चित्तोपरक्तं वस्तु ज्ञातम्भवति न सर्वम् ॥१०॥ ननु पुरुषोऽपि चित्तवत्परिणामीस्यादित्यत आह-। चेतस इति ।

चेतसोवृत्त्यो ज्ञाताः प्रभोरपरिणामिताम् ।
बोधयन्ति स्वयंभास्त्वं दृश्यत्त्वात्तस्य नेष्यते ॥११॥

चेतसश्चित्तस्य वृत्तयःप्रत्ययाः ज्ञातास्सर्वदा गृहीताः प्रभोः पुरुषस्यापरिणामितां चिद्रूपतां बोधयन्ति ग्राहयन्ति यदि चित्तवत्पुरुषः परिणामी भवेत्तदा शब्दादि विषयवच्चित्तवृत्तयोपि ज्ञाताज्ञाता भवेयुर्नहि शब्दादि विषयवच्चित्तवृत्तयोज्ञाताज्ञाता भवन्तीति न तत्प्रभुः पुरुषस्तद्दत्परिणास्यत एव स स्वयंप्रकाशोऽपि तस्य चित्तस्य तु दृश्यत्वात्परिणामित्वात् स्वयंभास्त्वं स्वयंप्रकाशत्वं नेष्यते ॥११॥ चित्तस्यास्वप्रकाशत्वे हेत्वन्तरमाह—। एकदेति ।

एकदा चोभयाऽ ज्ञानाच्चित्तान्तरप्रकाशने ।
बुद्धेरति प्रसङ्ग स्स्यात्स्मृति साङ्कर्य्यं मेव च ॥१२

एकदा—एकस्मिन् क्षणे। उभयस्य स्वस्य परस्य चाज्ञानादनवधारणाच्चित्तमस्वप्रकाशमित्यर्थः। यद्वा एकदा—एकस्मिन् क्षणे उभयस्य ज्ञानद्वयस्यानुभवसिद्धस्यापलापासम्भवान्नाणु चित्तमित्यर्थः। यदि चित्तमणुस्यात्तदैकस्मिन् क्षण उभयावधारणं न स्यात्—भवत्येकस्मिन्नपि क्षणे उभयावधारणमिति नाणु चित्तम्॥ ननु चित्तस्य चित्तान्तरेण ग्रहो भविष्यतीत्यतआह—। चित्तान्तरेति। बुद्धेर्बुद्ध्यन्तरवेदने तस्या अपि बुद्धित्वाद् बुद्ध्यन्तरं संवेदकं तस्याअपि बुद्ध्यन्तरमित्यनवस्थात्मकातिप्रसङ्गोदुरुद्धरतामापद्येत बुद्ध्योः परस्परं भासकत्वेऽन्योन्याश्रयः स्वयं प्रकाशत्वं तु परिणामित्वादेवानुपन्नम्। बुद्धेर्बुद्ध्यन्तर प्रकाशने च स्मृतिसङ्करः प्राप्नोति यावत्योबुद्धयस्तावत्यस्तत्संस्कारेभ्यःस्मृतयोवाच्यास्तथाच स्मृतीनामानन्त्येन किं विषयिणीयं स्मृतिरिति न ज्ञायेत॥१२॥ ननु सिद्धान्ते कथं बुद्धेस्संवेदनं सम्भवतीत्यत आह—। तदाकारेति।

तदाकारसमापत्तौ स्वबुद्धि संवेदनं चितेः।
सर्वार्थं द्रष्टृदृश्याभ्यां रक्तं चित्तमिहोच्यते॥१३॥

चितेः पुरुषस्य सन्निधौ बुद्धेस्तदाकारसमापत्तौ स्वबुद्धेः स्वस्य बुध्यात्मनोवेदनं प्रकाशो भवतीत्यर्थः। चिच्छक्तिं बुद्धिविशिष्टतां यदा सम्पद्यते तदा बुद्धिस्स्वात्मानमवभासयति न केवलेतिनाश्नुते बुद्धेर्बुद्ध्यन्तरप्रकाशनं स्वयं प्रकाशत्वं च, स्यात्तदाश्नुते बुद्धेः स्वयंप्रकाशत्वं बुद्ध्यन्तर संवेदनं चापलपामश्चेद्द्रष्टारं स्वयंप्रकाशमितिद्रष्टारमपलपन्तो भवन्त एव निरुक्तदोषैर्दुष्टाः। पुरुषाकारतामिव प्राप्तं चित्तं यदा विषयाकारेण परिणमते तदा तस्य सर्वग्रहणसामर्थ्यं जायत इत्याह—। सर्वार्थमिति। चित्तं ज्ञेयेन विषयेण स्वपरिणामित्वत्त्वारूढत्वसम्बन्धेन सम्बद्धं

स्ववमपि विषत्वाद्द्रष्टारं पुरुषमनुरञ्जाति यदाऽऽत्मीयवृत्त्या तदा सर्वार्थमुच्यते ॥ १३ ॥ द्रष्टरि प्रमाणमाह—। चित्तमिति ।

चित्तं संहत्यकारित्वात्परार्थं वासनान्वितम् ।
कोऽहमासं कथं त्वासं किंस्विदिदं कथं त्विदम् १४
इतःपरं भविष्यामः के कथं किंत्विदं कथम् ।
भविष्यतीति भावास्ते निवर्त्तन्ते विवेकिनः ॥१५॥

वासनाभिर्विचित्राभिरन्वितं चित्रीकृतं चित्तं परार्थं पुरुषार्थं भवितु मर्हति संहत्यकारित्वात्संघातपदार्थत्वादित्यर्थः । यथा शयनासनाभ्यङ्गगृहादयस्संघातपदार्थाः परार्था दृष्टास्तथा चित्तेनापि संहत्यकारिणा भवितव्यं तस्य संघातान्तरार्थत्वे तु तस्यापि संघातान्तरार्थतयाऽनवस्था प्रसज्येतेति परार्थतया चित्तस्य परपदार्थं पुरुषसिद्धिः ॥ एवं द्रष्टृदृश्ययोरन्यत्वे साधिते यस्तयोर्विशेषं पश्यत्यहमस्मादन्य इति तस्य विवेकिनो ज्ञात-चित्तस्वरूपस्य चित्ते या आत्मस्वभावनास्ता निवर्त्तन्त इति सार्द्धश्लोकषट्केन कैवल्यं निर्णेतुं भावनास्वरूपदर्शनपूर्वकं तासां निवृत्तिमाह—। कोऽहमिति ॥१४॥१५॥ ननु भावनानिवृत्तेः किम्भवतीत्यत आह—। चित्तमिति ।

चित्तं कैवल्य प्राग्भारं निम्नं विवेकजात्तदा ।
य एतदीयच्छिद्रेषु प्रत्यया वासनोदिताः ॥१६॥

यदस्य विवेकिनश्चित्तं वहिर्मुखं विषयसन्नमासीत्तद्विवेक-जाज्ज्ञानान्निम्नं वहिर्मुखतां परित्यज्यान्तर्मुखं सत्तदाऽऽत्मभाव-भावनानिवृत्तौ सत्यां कैवल्य प्राग्भारं कैवल्यफलं कैवल्यारम्भं वा भवति ॥ विवेकवाहिनश्चित्तस्यान्तरालेषु येऽन्तरायभूताः प्रत्यया भवन्ति तेषां हेतुमाह—। य इति । येऽन्तरायभूताः

प्रत्ययाः। एतदीयस्य विवेकस्थितस्य चित्तस्य छिद्रेषु—अन्तरालेषु—प्रत्ययाः—ज्ञानानि प्रादुर्भवन्ति ते वासनाभिर्व्युत्थानानुभवजनित संस्कारैरुद्दिताऽउत्पन्ना ज्ञेयाः। व्युत्थानानुभवजनित संस्काराणां चिरन्तनत्वेन दार्ढ्यात् पुनः पुनरावृत्तिर्भवतीति भावः ॥ १६ ॥ विवेकप्रतिद्वन्द्विनस्ते प्रत्यया विवेकवाहिनि चित्ते यदा प्रादुर्भवेयुस्तदेषां प्रत्ययानां हानं क्लेशवत्कर्त्तव्यमित्याह—। हानमिति।

हानमेषां तदा प्रोक्तं क्लेशवद्योगवित्तमैः।
प्रसंख्यानेऽकुसीदस्य सर्वथा भेदख्यातितः ॥१७॥
धर्म्ममेघसमापत्तिस्ततः क्लेशनिवर्तनम्।
सर्वावरणमले हीनं ज्ञानमल्पार्थकं तदा ॥१८॥

यथाऽविद्यादिक्लेशानां पूर्वं हानमुक्तं तथा व्युत्थानानुभवजनितसंस्काराणामपि हा कर्त्तव्यं यथा ज्ञानाग्निदग्धबीजभावाः क्लेशा न पुनः प्ररोहन्ति तथा व्युत्थानानु भवजनित संस्कारा अपीतिभावः। एवं प्रत्ययान्तरानुत्पादेन स्थिरीभूते चेतसि प्रसंख्यानमुत्पद्यते तस्मिन् सति योगिनस्समाध्युत्कर्षोपायं सफलं सार्द्धैकश्लोकेनाह—। प्रसंख्यान इति। यावतां तत्त्वानां यथाक्रमं यथा भावेन व्यवस्थितानां युगपत्परस्परविलक्षण स्वरूप भावनं प्रसंख्यानं तस्मिन् सति अकुसीदस्य फलानाकांक्षिणो योगिनः प्रत्ययान्तरानुत्पादे सर्वथा सर्वप्रकारेण भेदख्यातितो विवेकज्ञानात्। धर्म्ममेघसमापत्तिस्समाधिर्भवति धर्म्ममशुक्लाकृष्णं परमपुरुषार्थसाधकं मेहति सिञ्चतीति धर्म्ममेघः। ततस्तस्माद्धर्म्ममेघात्। क्लेशानामविद्याद्यभिनिवेशान्तानां निवर्त्तनं निवृत्तिर्विनाशो निरोधो भवति छिन्ने क्लेशात्मके मूले कुशलाकुशलाश्च कर्म्माशयाः स्वयमेव छिन्ना न प्ररोहं लभन्ते निवृत्तेषु

क्लेशकर्म्माशयेषु तदा तस्मिन्काले सर्वैः सकलैरावरणमलैराव-रकदोषैः क्लेशकर्माशयैर्हीनं रहितं ज्ञानम्। अल्पार्थकं स्वल्प विषयं भवतीत्यर्थः। सर्वावरणमलापेतस्य ज्ञानस्य शरद्गगन सदृशस्यानन्त्यात् ज्ञेयमल्पं गणनास्पदश्च भवतीतिभावः। धर्म-मेघस्य फलान्तरमाह—। गुणानामिति। अतः—अस्माद्धर्म-मेघात् ॥ह७॥१८॥

**गुणानां कृतकार्य्याणां परिणामक्रमोऽप्यतः।**
**नोत्सहते क्षणं स्थातुं निवृत्तो जारवत्तदा ॥१९॥**

गुणानां सत्त्वरजस्तमसां कृतं निष्पादितं भोगापवर्गलक्षणं कार्य्यं यैस्तेषां परिणामस्याऽऽ पुरुषार्थसमाप्तेरानुलोम्येना ङ्गाङ्गिभावस्थितिलक्षणस्य योऽसौ क्रमोवक्ष्यमाणस्स निवृत्तः परिसमाप्तस्सन्—क्षणमपि स्वल्पकालमपि तदा स्थातुं नोत्सहते॥ अत्रानुरूपं दृष्टान्तमाह—। जारवदिति। यथा कश्चिज्जारः पर-स्त्रीलम्पटः कस्मिंश्चिदन्यस्य गेहे परस्त्रियमभिगम्य तत्र तदा-स्थातुंनोत्सहते प्राणविनाशभयात्तद्वत् ॥१९॥ उक्तक्रमस्य लक्षण-माह—। क्रम इति।

**क्रमोऽपरान्त निर्ग्राह्यः प्रतियोगी क्षणस्य तु।**
**गुणाप्ययः प्रतिष्ठा वा चितेः कैवल्यमीरितम् ॥२०॥**

**इति योगमकरन्दे श्रीकुलयशस्वि शास्त्रि प्रणीते**
**चतुर्थः कैवल्यपादः।**

क्षणोऽल्पीयान् कालस्तस्य यः प्रतियोगी वर्त्तमान परिणामसमनन्तरजायमानः परिणामः। अपरेष्वनुभूतक्षण वर्त्तमानपरिणामेषु अन्तनिर्ग्राह्यः पश्चात्सङ्कलनबुद्ध्यान्तिमक्षणेऽ

नुभूयमानः यः परिणामस्य क्रम उच्यते। इदानीं फलभूतस्य कैवल्यस्यासाधारणं रूपमाह—। गुणाप्यय इति। गुणानां समाप्त भोगापवर्गलक्षणपुरुषार्थानां योऽप्ययः प्रतिप्रसवः परिणाम-समाप्तौ विकारानुत्पादः। चितेः चिच्छक्तेः पुरुषस्य प्रतिष्ठा वृत्ति-सारूप्य निवृत्त्योपचरितभोगनिवृत्तौ स्वरूपेणावस्थानं वा कैवल्य मपवर्ग ईरितमुदाहृतः॥ तथाच सर्वोपायैः सर्वैस्स्वरूपावाप्तये यत्नोविधेयो येन न घोरेषुसंसाराङ्गारेषु परिपाकोभवेदिति पूर्वेषां महर्षीणामाशयः।

संगृह्य सूत्रनिचयं प्रथमं महर्षे
र्मूलास्मृतंव्यरचयं जनतद्धितेहितोः।
आलोड्यभाष्यममलारचिता मयैषा
योगामृतस्य मनसां सुदमादधात ॥१॥

यस्माङ्घ्रिषु कृतश्रमो सुहुरहो योगीषु योगीश्वरो।
वेदान्तेषु विदांवरोऽतिनिपुणो जातो यशस्वो कुले॥
तेनेयं जनचित्तरञ्जनकरो जाड्यंजरो मञ्जरी।
शुभ्रा शोकभरो प्रियेव विहिता पश्यन्तु धीरा धिया॥२॥

इति श्रीयोगमकरन्दव्याख्यानस्वरूपायां सांख्ययोग वेदान्तो-पाध्यायसारस्वतवंशोदधि पूर्ण चन्द्र श्रीगिरिधार्य्यात्मज दर्शना-ध्यापक श्रीराममिश्रशास्त्रि शिष्य श्रीकुलयशस्विशास्त्रि प्रणी-तायां योगमञ्जर्य्यां चतुर्थः कैवल्यपादः॥

"समाप्तश्चायं ग्रन्थः॥"

नमः परमात्मने

ॐ

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृ० | पं० |
|---|---|---|---|
| मह्वत्त्वस्य | महत्तत्त्वस्य | ६ | १ |
| मध्व | मध्य | २२ | १२ |
| पञ्च | पञ्च | २४ | ४ |
| सेका | सेको | २५ | १ |
| तरम्यं | तारतम्यं | २६ | २५ |
| श्रय | श्र | २८ | २६ |
| षर्गा | षो | ३२ | २० |
| द्धि | बुद्धि | ३५ | २६ |
| तद | तद् | ३८ | ३ |
| | गोज्ञानत्व | ३८ | ८ |
| स्वल्वल्प | स्वल्प | ४८ | ८ |
| ररसम्भवात् | रसम्भवात् | ५५ | २३ |
| मद | मध्य | ६० | २६ |
| पारिग्रहः | परिग्रहः | ६२ | १ |
| तच्छुद्धि | तच्छुद्धि | ६२ | १५ |
| धार्म्मिं | धर्म्मि | ७२ | १४ |
| कठिनत्वाद्य | कठिनताद्य | ७२ | १४ |

